# मुक्तधारा

कविगुरु-रवीन्द्रनाथविरचित-वङ्गभाषामयनाटकस्य संस्कृतानुकल्पनम्

अनुकल्पकः
श्रीध्यानेश-नारायण-चक्रवर्ती, साहित्यशास्त्री, एम्-ए
कलिकाता-रवीन्द्रभारती-विश्वविद्यालयस्य संस्कृतविभागस्य
रवीन्द्रसाहित्यस्य चाध्यापकः ;
कलिकाता-संस्कृत-साहित्यपरिषदः सांस्कृतिक-सम्पादकश्च ।

# MUKTA-DHĀRĀ

Sanskrit rendering of the Bengali drama
of the Great Poet Tagore.

By
**Professor Dhyanesh Narayan Chakravorty**
Sahitya-Sastri, M.A.
Calcutta University Gangamoni Medalist.
Lecturer, Sanskritic Studies & Rabindra Literature,
Rabindra Bharati University, Calcutta ;
Cultural Secretary, Sanskrit Sahitya Parisat, Calcutta.

CALCUTTA
1964.

# मुक्तधारा

कविगुरु-रवीन्द्रनाथविरचित-वङ्गभाषामयनाटकस्य संस्कृतानुकल्पनम्

अनुकल्पकः
श्रीध्यानेश-नारायण-चक्रवर्ती, साहित्यशास्त्री, एम्-ए
कलिकाता-रवीन्द्रभारती-विश्वविद्यालयस्य संस्कृतविभागस्य
रवीन्द्रसाहित्यस्य चाध्यापकः;
कलिकाता-संस्कृत-साहित्यपरिषदः सांस्कृतिक-सम्पादकश्च ।

# MUKTA-DHĀRĀ

Sanskrit rendering of the Bengali drama
of the Great Poet Tagore.

By
Professor Dhyanesh Narayan Chakravorty
Sahitya-Sastri, M.A.
Calcutta University Gangamoni Medalist.
Lecturer, Sanskritic Studies & Rabindra Literature,
Rabindra Bharati University, Calcutta;
Cultural Secretary, Sanskrit Sahitya Parisat, Calcutta.

CALCUTTA
1964.

एम्-ए, बि-टि, चक्रवर्तीत्युपाधिकया श्रीमत्या ऊषा-देव्या प्रकाशितोऽयं ग्रन्थः
१३२/५, शरत् घोष गार्डेन् रोड्, कलिकाता—३१




प्राप्तिस्थानम्
संस्कृत पुस्तक भाण्डार
३८ संख्यक बिधान सरणि,
कलिकाता—६

*Can be had from :*
Sanskrit Pustak Bhandar
38, Bidhan Sarani,
Calcutta-6.

*Published by*
**Sm. Usha Devi Chakravorty,** M.A., B.T.
132/5, Sarat Ghosh Garden Road,
Calcutta—31
West Bengal.

*Printed by*
**New Printers**
209/C, Bidhan Sarani,
Calcutta—6.

# समर्पणपत्रम्

येषां खलु महात्मनां जननान्तरसौहृद-सम्भूत-दाक्षिण्यं संलभ्य
कर्मजीवनं मे विकसितं, सारस्वतजीवनञ्च धन्यं जातम्,
येषां भागीरथीप्रतिमया करुणामृतधारया सदैवाहम-
भिषिक्तस्तेषामेव कुलपतिकल्प-महाचार्याणां प्रतिभा-
प्रोद्भासित-प्राच्य-प्रतीच्य-भुवनद्वयानां कलिकाता-
संस्कृतमहाविद्यालय-महाध्यक्षाणां ज्ञान-कर्म-
भक्तिसमन्वयविग्रहाणां प्रज्वलित-
सनातनधर्मप्रदीपाणां
महाचार्य—डक्टर्-श्रीयुक्त-गौरीनाथ-भट्टाचार्य-शास्त्रि-
एम्-ए, पि.-आर्-एस्, डि-लिट्, एफ्-ए-एस्, महोदयानां
कल्याणकरकमलेषु दीनस्यान्तेवासिनः सारस्वत-
श्रद्धार्घ्यरूपेण समर्पितोऽयं ग्रन्थः।

श्रीगौरीनाथ-शास्त्री मम गुरुपरमो ज्ञानशीलाभिरामः
नित्यस्नेहानुशीलः सुविमलचरितो देशविश्रान्तकीर्तिः।
यत्पादाम्भोजसंगात् सुचिरविलसितं सिद्धिमाप्तं व्रतं मे
तस्य श्रीपाणिपद्मे ससुखमुपहृता नाटिका मुक्तधारा ॥

## रवीन्द्रप्रशस्तिः

ज्योतिर्जित्वरमुत्सृजञ्जगदिदं कर्मण्यभिप्रेरयन्
जाड्यं जर्जरयंस्तमांसि तिरयन् सर्वं समुद्दीपयन्।
पाप्मानं विनिपातयन् प्रतिपदं भद्रं समुद्भासयन्
भूयादभ्युदयो रवेरविरतं विश्वस्य भव्यं वहन्॥
भेदो यस्य न वस्तुतोऽस्ति भुवने प्राची प्रतीचीति वा
मित्रत्वं प्रकटीकृतञ्च सततं येनात्मनः कर्मणा।
विश्वं यस्य पदं प्रसिद्धमनिशं सत्ये च यस्य स्थिति-
र्भूयात्तस्य जयो रवेरविरतं तेनास्तु तृप्तं जगत्॥

पञ्चत्रिंशदुत्तरत्रयोदश-वङ्गाब्दीयसौरवैशाखस्य पञ्चविंशदिवसे
रवीन्द्रजन्मोत्सवमुपलक्ष्य विश्वभारतीसम्मिलनीपक्षतो
मुद्रितं प्रकाशितञ्च श्लोकद्वयम्।

# विषयानुक्रमणिका

## CONTENTS

# प्राक्कथनम्

सुदीर्घकालादनन्तरं पूर्णतां गतो मे बहुदिवसपोषितो मनोरथः। प्रकाशं गता संस्कृतभाषामयी "मुक्तधारा"। कवीन्द्रेण रवीन्द्रेण वङ्गभाषया रचितेयं नाटिका कविकुलकिंकरेण सुरभारतीसेवकाधमेन मया संस्कृतभाषया चानुकल्पिता। संस्कृतप्रणयिनां तथा सहृदय-रसिकानाञ्च सन्तोषविधानार्थं, निखिले जगतीतले वङ्गभाषानभिज्ञानां संस्कृतविदां रवीन्द्रसाहित्यपाठजनितानन्दसन्दोहजननार्थमधुना सा खलु नाटिका सामाजिकानां पुरतः श्रद्धया निवेद्यते।

मम पितृचरणानामनुवर्तनेनाशैशवं सारस्वतसेवायां निरतोऽहं सुरभारत्या वङ्गभारत्याश्चानुपम-माधुर्यरसेन सुतरामभिषिक्तः। परञ्चे-दानीन्तनकविकुलललामभूतः कविसार्वभौमो रवीन्द्रनाथः शाश्वत-भारतीयसंस्कृतेः प्रमूर्तो विग्रह इति मे प्रतिभाति। नवनवोन्मेष-शालिनी या खलु सारस्वती प्रज्ञा, तस्या लोकोत्तरप्रतिभायास्त्वधिकारी रवीन्द्रनाथः। प्रतिभायाश्चैतस्याः विकाशे गीर्वाणवाण्याः सीम-रहितमवदानं संलक्ष्यते। संस्कृतसाहित्यस्य सरसभूमौ हि प्रोथितं वर्तते रवीन्द्रसाहित्यरूपिणः कल्पतरोर्मूलम्। सार्थकोपाधिकस्य महर्षेः पितुः शिक्षया दीक्षया च तस्य कैशोरं चित्तमुपनिषदो भावादर्शेन जीवनप्रभात एव समुद्बुद्धमासीत्। द्विजेन्द्रनाथ-सत्येन्द्रनाथ-ज्योतिरिन्द्र-नाथ-प्रमुखाणां महामनस्विनामग्रजानामकुण्ठसंस्कृतसाहित्यज्ञानेन च तरुणे वयस्येवासौ कविः प्रभावितः सञ्जातः। तस्य सुदीर्घ-जीवन-व्यापिन्यां कर्मसाधनायां ज्ञानसाधनायाञ्च सदैव लक्ष्यते संस्कृत-भाषायाः संस्कृतकाव्यस्य च घनिष्ठः संयोगः। ऊनविंशशतके यद्यपि स आविर्बभूव, तथापि संस्कृतसाहित्यस्य वैदिके तथा पौराणिके युगे विहरति तस्य सौन्दर्यसन्धायि कविचेतः। भावादर्शेन रवीन्द्रनाथो वैदिकानामृषीणां सगोत्रः; रूपकल्पनेन च संस्कृतपौराणिक-कवीनां स खलु सतीर्थ्यः। उपनिषद् अध्यात्मसम्पृक्तिचयेन, रामायण-महा-

भारतयोः समुदार-चरित्र-चित्रणेन, अमरु-भर्तृहरिप्रमुखाणां सुकुमार-शृङ्गारसज्जया, कादम्बरी-हर्षचरितयोः प्रसन्नगम्भीर-रचनाशैल्या—तथा निखिल-संस्कृत-साहित्यस्योदात्त-महिम्ना मधुर-सौकुमार्येण च स खलु चिरमेव मुग्धः प्रबुद्धश्चासीत्। किमधिकं, तस्य गद्यपद्यानां वाक्यविन्यासः प्रायशस्तेन साकं कालिदासस्य निविड़ं परिचय-मावहति। अतो ये खलु वैदेशिकपण्डितमूर्धन्याः काव्यरसिकाश्च रवीन्द्रनाथं साग्रहं समादृतवन्तस्ते सर्व एव प्रायः संस्कृतविद्यानिष्णाताः। भिंटारनिज्-सिल्भ्याँलेभि-लेसुनि-नर्मान्ब्राउन्-प्रमुखाः प्राच्यविद्या-निष्णाताः पण्डितप्रकाण्डाः रवीन्द्रकाव्ये परिचितसंस्कृतनिष्ठ-प्रियस्वराणामालपनमाकर्ण्य रवीन्द्रसाहित्यसमादरे पुरोयायिनः सञ्जाताः। प्रसङ्गेऽस्मिन् रवीन्द्रनाथस्य सप्ततितमवर्षपूर्तिमुपलक्ष्य पाश्चात्यमनीषिणा शैलकण्ठभट्टेन (Prof. Sten Konow) विरचितः श्रद्धाञ्जलिः सदैव स्मरणीयः—

"It was an Indian poet who at last opened the eyes of the West. Through William Jones' translation of Kalidasa's Sakuntala Europe came to know something about India's soul, about the ideals, the aims, and the aspirations of the people of India. And this led to a keen interest in India, her history and civilisation.

It was, however, chiefly ancient India which attracted the interest of the west. Kalidasa was the poet, and the ancient seers and thinkers were the last and noblest product of India's genius.

Even when modern Indians come to play a role in the spiritual development of the West, it was chiefly as interpreters of the wisdom of the past that they were greeted and admired.

Then came the day when another Indian poet conquered the West. This time it was not one of

by-gone times, but one who lived and sung in modern India, whose tune was that of the Indian landscape, the Indian river, the Indian forest and the Indian village of today.

Again the West listened and marvelled. *It found the same authentic beauty, the same sublime flight of thought as in Kalidasa's immortal works: the old spirit was still alive.* (The Golden Book of Tagore. Page. 130.)

संस्कृताश्रितस्य यस्य खलु भावादर्शस्य गुणग्राही आसीदसौ पण्डितवर्यस्तमेव भावादर्शं रवीन्द्रमानसे दृष्ट्वा स नितरां श्रद्धाप्लुतः सञ्जातः। ईशवीयैकत्रिंशदुत्तरोनविंशशतकस्य सेप्टेम्बरमासस्य विंशदिवसे वङ्गप्रान्तीय-संस्कृतपण्डिताः "कलिकाता-राष्ट्रिय-संस्कृत-महाविद्यालये" 'कविसार्वभौम' इत्युपाधिना रवीन्द्रनाथं संवर्धयामासुः। संस्कृतशिक्षां विना भारतीयानां मातृभाषाशिक्षा व्यर्थतां गमिष्यतीति विचिन्त्यायं महाकविस्तत्प्रतिष्ठित-विश्वभारती-विश्वविद्यालये स्वयमेव छात्रान् प्रथमतः संस्कृतभाषां पाठितवान्। विश्वविद्यालयेऽस्मिन् महामहोपाध्याय-विधुशेखरशास्त्रि-देशिकोत्तम-क्षितिमोहनशास्त्रि-महोदय-प्रमुखाः प्रायः सर्वे शिक्षकाः संस्कृतनिष्णाता आसन्। तत्र हि उपनिषन्मन्त्रोच्चारणेन छात्राणां दिवसारम्भो जातः। सर्वभारतीयक्षेत्रे संस्कृतभाषाव्यवहार एव आसीत्तस्य प्रवणता। यदा तु चैनिकसांस्कृतिकप्रतिनिधयः शान्तिनिकेतनमागतास्तदा संवर्धनासभाया अनुष्ठानानि संस्कृतभाषयैव रवीन्द्रनाथः परिचालितवान्। महापण्डितस्य उइण्टारनिज महोदयस्यापि संवर्धनासभा संस्कृतेनैव निर्वाहिता। तदा तु "अभिज्ञानशाकुन्तल"मिति नाटकस्य अभिनयोऽपि विहितः। ईशवीय-चत्वारिंशदुत्तरोनविंशशतके उक्षतीर्थ-विश्वविद्यालयपक्षतः (Oxford University) सम्मानात्मक-साहित्याचार्येत्युपाधिग्रहणकाले (D. Lit.) "भारतीयकविः"

रवीन्द्रनाथः शाश्वताखण्डभारतीयसंस्कृतेः धात्रीस्वरूपया संस्कृतभाषयैव समावर्तन-प्रतिभाषणं प्रदत्तवान्। भट्टबाणस्य गद्यरीत्या सुरचितं तस्य गीर्वाणवाणीमयं भाषणमांगलं प्रतिरूपञ्च विपश्चितां तृप्तये समुद्ध्रियेते।—

"भवन्त उक्षतीर्थ-विश्वविद्यालय-प्रतिभुवः!

एषोऽस्मि कश्चित् कविर्भारतवर्षस्य। तं मां सम्भावयन्ती सा किल भवतां प्रत्ना विद्याभूमिर्नूनमात्मनो मानवधर्माम्नायमेव महान्तमाविष्कर्तुम् ईहते यस्य खल्वर्थः साम्प्रतमतितरां गम्भीरश्च अनतिपात्यश्च संवृत्तः। गर्वोत्तानं मे चित्तं प्रतिपद्यास्य वाचिकं प्रतिपत्तिं चैतां प्रहितां प्रतीकमिव अनश्वरं मानवधर्मात्मनः। सभाजयामि भवतोऽत्र शान्तिनिकेतने। यदेतदनर्घमुपायनमानीतं भवद्भिर्मदर्थं मद्देशार्थञ्च, चिरं तदवस्थास्यते अस्मद्हृदयेषु, सम्पत्स्यते च तद् भवतामस्माकञ्च साधारण-संस्कृति-सम्पत्तय इति प्रतियन्तु भवन्तः।

स खल्वयं कालः प्रवर्धते यत्राङ्कः। तिरोधत्ते गुणः। प्रसरति अशिष्टत्वं निरङ्कुशम्। प्रवर्तते च पशूचिता स्पृहा भोगे समुपचीयमाना भूतविद्यया।

अस्मिन् हि व्यतिकरे कस्यापि भुवनव्यापिनः सम्बन्धस्य वीजसमुद्गमोक्तिर्नाम कदाचित् कविजनोचितेव प्रतीयते। तथापि तु संयम्यते कालस्तर्जयन्नपि निरन्तरम्। किञ्च ये नाम वयम् अतीत्याप्येनं जीवामः प्रतीमश्च यदार्यधर्मश्चरमार्थसम्पत्तये वर्धेतैव नित्यमिति तैरस्माभिः सेयं प्रतीतिरवश्यं प्रत्यग्रीकरणीया।

क्षेमं बतेदं निमित्तं कस्याप्यनागतस्य समयस्येति प्रतिगृह्यते मयैषा प्रतिपत्तिर्विहिता उक्षतीर्थविश्वविद्यालयेन। नूनं न जीविष्याम्यहम् अवलोकयितुमेनं प्रतिष्ठितम्।

सभाजनीयस्त्वेष तस्य सप्रणयः सङ्केतः सङ्गर इव दिवसानां प्रशस्यतराणामिति शिवम्।

शान्तिनिकेतनम्
शकाब्दाः १८६१-४-२२

रवीन्द्रनाथठाकुरः"

कविगुरुकृतमाङ्गलप्रतिरूपम्—

"Delegates from Oxford University,

In honouring me, an Indian poet, your ancient seat of learning has chosen to express its great tradition of humanity. This tradition, to day has acquired a deeper and more pressing significance. I feel proud to accept its message, and the recognition it conveys, as a symbol of the undying spirit of man. I welcome you here at Santiniketan, and I assure you that this friendly gift that you have brought to me and to my country, will remain in our hearts and bid us stand together for the common cause of civilisation.

In an era of mounting anguish and vanishing worth, when disaster is fast overtaking countries and continents with savagery let loose and brutal thirst for possession augmented by science, it may sound merely poetic to speak of an emerging principle of world-wide relationship. But, Times violence, however immediately threatening, is circumscribed, and we who live beyond it and dwell also in the larger reality of Time, must renew our faith in the perennial growth of civilisation toward an ultimate purpose.

I accept this recognition from Oxford University as a happy augury of an Age to come and though I shall not live to see it established, let me welcome this friendly gesture as a promise of better days."

अतः, संस्कृतभाषायाः साहित्यस्य च भावसम्पद्भिः सुसमृद्धं यद् वङ्गभाषामयं रवीन्द्रसाहित्यं तस्यानुवादविषये संस्कृतभाषैव

योग्यतमा भाषा। भावादर्शस्य ऐक्यात्, रूपकल्पनस्य च सादृश्यात् साहित्यस्यास्य मौलिकभावसम्पदः संस्कृतेनैव सुरक्षिता भविष्यन्ति। अतः खलु रवीन्द्रनाटकस्य संस्कृतानुवादे मे प्रयासः।

किञ्च, रवीन्द्रसाहित्यस्य संस्कृतानुवादेन सिध्यत्यपरमपि सुमहत् प्रयोजनम्। तत्तु, निखिले भारते सर्वेषां जनानामैक्य-संविधानं तथा भावगतसंहतिसाधनम्। सुप्राचीनकालादारभ्य सामग्रिकभारतीयसंस्कृतेः केवलमेकैव धात्रीयं विज्ञानसम्मता सुरभाषा। भाषामिमामाश्रित्य प्रतियुगमेव भारतीयप्रज्ञायाः विचित्रः प्रकाशो नवनवरूपेण लीलायितः। अस्मिन् प्रसङ्गे सुविख्यात-स्फाररसिकमनीषिणो डाः लूइ् रेणो महोदयस्योक्तिः स्मरणीया।—

"There is no living culture without a living tradition. If India is beloved and cherished among the elite of the west, it is on account of her traditional culture. And this culture is embeded above all in the treasures of Sanskrit. Sanskrit and India are inseparably connected inspite of all the transitory harangues of the politicians."

(Dr. Louis Renou, Paris University.)

मोक्षमूलरप्रमुखाणां पण्डितप्रकाण्डानां सदुक्तयोऽपि स्मरणीयाः। उपमहादेशेऽस्मिन् निखिले भारते विराजते एकैवाखण्डा संस्कृतिः। सा तु संस्कृतभाषाश्रिता। यद्यप्यधुनातन-भारतीया विभिन्नभाषा-भाषिणस्तथापि तेषां सर्वेषामैतिह्यन्तु एकमेव पुनः संस्कृतभाषाश्रितञ्च। हिन्दीभाषा, वङ्गभाषा, तामिलभाषा, अन्या या काऽपि वा इदानीन्तनी भाषा भवतु, सा त्वेव प्राधान्येन प्रदेशविशेषे प्रचलिता सीमिता च। अतस्तासां नास्ति सर्वभारतीयमावेदनम्। संस्कृतमेव विभिन्नभाषाभाषिणां विभिन्न-देशवासिनां भारतीयानां बन्धन-सूत्रम्। केवलं संस्कृतभाषायामेव वर्तते सर्वभारतीयमावेदनम्। अतः प्राचीनकालादारभ्य ये खलु महात्मानो निखिले भारते

भावधाराप्रचारार्थं बहिर्गतवन्तस्ते सर्वे भाषणकाले संस्कृतमेव आश्रितवन्तः। केरलदेशोद्भूतो भगवान् श्रीमच्छङ्कराचार्यो वङ्गदेशसमुद्भूतो भगवान् श्रीकृष्णचैतन्यश्चाखिले भारते तयोर्धर्मप्रचारणे संस्कृतमेवावलम्बितवन्तौ न तु प्रादेशिकभाषाम्। ऊनविंशशतके महात्मा राजा राममोहन-राय-महोदयो विंशशतके दयानन्द-सरस्वतीप्रमुखाः मनस्विनः संस्कृतमेवाश्रित्य सर्वभारते तेषाँ नवीनादर्शं प्रचारितवन्तः। अनया सर्वभारतीयभाषास्वरूपया संस्कृतभाषया यदि रवीन्द्र-साहित्यस्यास्य अनुवादः क्रियते, तदा सर्वैरेव भारतीयैरधिकंभावेन अस्य साहित्यस्य रसो ग्रहीतुं शक्ष्यते, जातीयसंहतिश्च सुदृढ़ा सम्भविष्यत्यचिरकालेनैव।

अतःखलु रवीन्द्रसाहित्यस्य संस्कृतानुवादे ममायं प्रयत्नः। विशेषतः, ईशवीयैकषष्ट्युत्तरोनविंशशतके रवीन्द्रजन्मशतवर्षपूर्तिमहोत्सवो निखिले विश्वे सर्वत्रैवायोजितः। एतदुपलक्ष्य उत्सवात् कति वर्षेभ्यः प्रागूरवीन्द्ररचनानां संस्कृतानुवादे आत्मानमहं नियोजितवान्। एतद्विषये कविसार्वभौम-भ्रातुष्पौत्रस्य विदग्धस्य रसवेत्तुः प्रख्यात-देशहितैषिणः सौम्यदर्शन-सौम्यभाषि-श्रीयुक्त-सौम्येन्द्रनाथठाकुर-महोदयस्य न केवलं प्रेरणा ताड़नाऽपि मया कृतज्ञतया स्मर्यते। प्रथमतो मया रवीन्द्रनाथविरचितं "डाकघर" इति सुविख्यात-नाटकं "वार्तागृहम्" इति नाम्ना संस्कृतेनानुकल्पितम्। तत्तु "कलिकाता-केन्द्रीय-नागरिक-समिति"-प्रयोजिते रवीन्द्रजन्मशतवार्षिक-महोत्सवे महता समारोहेण कलिकातायां "संस्कृत-साहित्य-परिषत्"सदस्यैरभिनीतं रसिकैः सामाजिकैश्चाभिनन्दितम्। तदनन्तरम् "अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलन"स्य षड् विंशाधिवेशनस्य प्रथमे दिवसे स्वर्गत केन्द्रीय-मन्त्रिणः बलवन्त-नागेश-दातार-महोदयस्य साभापत्येन, कलिकाता-"संस्कृत-साहित्य-परिषदः" षट्चत्वारिंशत्तम-वार्षिकोत्सवे केन्द्रीय-संस्कृति-मन्त्रि-डाः हुमायुन्कवीर-महोदयस्य च पौरोहित्येन, कलिकाता "आकाशवाणीकेन्द्रे" च बहुशो नाटकमिदमभिनीतं समभिनन्दितञ्च

विद्वद्भिः। एतद् "वार्तागृहम्" भारतसर्वकारेण प्रकाशनार्थं गृहीतम्। अनेनोत्साहं संप्राप्य मया "मुक्तधारा"-नाम्नी विख्यातनाटिका पुनरनूदिता, कलिकाता-"संस्कृत-साहित्य-परिषत्"-पत्रिकायाञ्च धारावाहिकक्रमेण प्रकाशिता। सा त्वधुना गुणग्राहिणां प्रोत्साहनात् ग्रन्थरूपेण प्राकाश्यं नीयते। पण्डितकुलधुरन्धर-डाः वेङ्कटेश-राघवन्-महोदयेनानुरुद्धः रवीन्द्रनाथस्यानुपम-क्षुद्राख्यानानामपि संस्कृतानुवादं कृत्वा प्रकाशनार्थं तत् सकाशमेवाऽहं प्रेषितवान्। "कलिकाता-संस्कृत-साहित्यपरिषत्-पत्रिकायाः" "रवीन्द्रसंख्या" तु रवीन्द्ररचनानां संस्कृतानुवादैरतीव समृद्धा।

भवतु। अस्मिन् महति कर्मणि मम प्रवेशो नाऽभविष्यद् यदि कतिचिन्महान्तो मां स्निग्धदृष्ट्या सहायतां नाऽकरिष्यन्। प्रथमतो मम परमाराध्यः पितृदेवः श्रीयुक्त-विश्वेश्वर-विद्याभूषण-काव्यतीर्थ-काव्यरत्न-महोदयो न केवलं मम जन्मदाता, अपि तु शिक्षादाता, मम सारस्वत-साधनायाञ्च दीक्षादाता। अस्मिन्ननुवादे यदि कुत्रापि गुणा दृश्यन्ते, तास्तु तस्यैव ; दोषास्तु सर्वे ममैव मूर्खताप्रसूताः—इति ध्रुवमेव। मम मातृदेवीनां श्रीमतीनां महामाया-देवीनां शुभप्रेरणा चास्मिन् कर्मणि सदैव स्मर्यते। पुनर्मम सहधर्मिणीनां राजनीतिविज्ञाने "एम्-ए" इत्युपाधिधारिणीनामपि श्रीमतीनाम् ऊषा-देवीनामान्तरिकी सहायता संस्कृतग्रन्थप्रकाशरूप-कर्मण्यस्मिन् संलब्धा।

कविवर्यस्य रवीन्द्रनाथस्य भ्रातुष्पौत्रः कर्मज्ञानसमन्वयैकमूर्तिः सार्थकनामा श्रीयुक्त-सौम्येन्द्रनाथ-ठाकुर-महोदयो ग्रन्थस्यास्य भूमिकां विरचय्य मां कृतार्थीकृतवान्। रवीन्द्रसाहित्य-विश्लेषणे तस्य दाक्ष्यं जगत्यतुलनीयम्। वरेण्याय तस्मै महात्मने निवेद्यते मया भक्तिविनम्रा श्रद्धा।

ग्रन्थस्यास्य प्रकाशनमभिलक्ष्य भारतसंघस्य महामान्य-राष्ट्रपतीनां प्रतिभाप्रोद्भासितदिङ्मण्डलानां विश्ववरेण्य-दार्शनिक-

वर्याणां परमाचार्य-श्रीयुक्त-सर्वपल्ली-राधाकृष्ण-सर्वागमसार्वभौम-महोदयानामाशीर्वचनं संलभ्य यातोऽहं कृतार्थगणनाम्। भारतीय-संस्कृतेस्तेभ्यो मूर्तविग्रहेभ्यो निवेद्यते मया सबहुमानः श्रद्धा-प्रसूनाञ्जलिः।

ज्ञानकर्मभक्तीनां त्रिवेणीसंगमो यस्य मानसक्षेत्रं भूषयति, कविसार्वभौमस्य रवीन्द्रनाथस्य भावादर्शप्रचारणे यः खलु योग्यतमो नायकः, प्रशासकः सन्नपि यः खलु सिद्धः सारस्वतः, रवीन्द्रभारती-विश्वविद्यालयस्य माननीय उपकुलपतिः श्रीयुक्त-हिरण्मय-वन्द्योपाध्याय-आइ-सि-एस्-महोदयो मयि सन्तत-स्नेहशीलः। एतन्महति कर्मणि शुभकामनां विज्ञाप्य तत्रभवान् मां कृतकृतार्थं कृतवान्। एतेभ्यो मनीषिभ्यो निवेद्यते मया कृतज्ञतामधुरा प्रणतिः।

येषां खलु महामनीषिणां संस्कृत-साहित्यसम्प्रचारे अकुण्ठ-सहयोगितां, कर्मण्यस्मिन् च गभीरं स्नेहपूतमाशीर्वचनञ्च संप्राप्य धन्योऽहं—तेभ्यो विश्वविख्यात-प्राच्यतत्त्वविद्भ्यो भाषाचार्येभ्यः श्रीयुक्त-सुनीति-कुमार-चट्टोपाध्याय एम्-ए, डि-लिट् (लण्डन, रोम) महोदयेभ्यः सविनयं समर्प्यते मम भक्तिकुसुमाञ्जलिः।

सारस्वतकुल-ललामभूतानां, पण्डितकुलधुरन्धराणां प्राच्यपाश्चात्त्य-विद्यार्णवपारंगतानामन्तेवासिषु स्नेहनिर्झरस्वरूपाणां कलिकाताविश्व-विद्यालय-प्राक्तनाशुतोषाध्यापकानां नवनालन्दामहाविहारस्य शील-भद्रसदृशानां महाध्यक्षपादानां मदीयाचार्यवर्याणां श्रीयुक्त-सातकड़ि-मुखोपाध्याय एम्-ए, पि-एइच्-डि-महोदयाना-माशी-र्वचनेन कृतकृत्योहं तेषां चरण-कमलेषु प्रणमामि।

पण्डितमूर्धन्या ममाचार्यचरणा महामहोपाध्याय-श्रीयुक्त-कालीपद-तर्काचार्य-महोदयाश्चिरमेव मयि अमेयस्नेहपरायणाः। संस्कृतसाहित्यसंसदि अतुलनीयकीर्तिमतां सुरगुरुकल्पानामेतेषां पण्डित

वर्याणां शुभाशंसनं संलभ्य कृतकृत्योऽहं सञ्जातः। तेषां चरणकमलेभ्यो नतमौलिरहं प्रणमामि।

सनातनधर्मादर्शस्य मूर्तविग्रहरूपाणां वर्तमान-संस्कृतसाहित्यजगति कालिदासकल्पानां मदीयाचार्यवर्याणां **पण्डितराजानां श्रीयुक्त-श्रीजीव-न्यायतीर्थ-एम्-ए-महोदयानां** प्रोत्साहनं मम जीवने दुर्लभा सम्पत्। तेषामाशीर्धन्येन मया तं महान्तमुद्दिश्य निवेद्यते कोटिशः प्रणामाञ्जलिः।

सुरभारतीसेवकोत्तमानां दिगन्त-विश्रान्त-कीर्तिमतां **कलिकाता-विश्वविद्यालय-प्राचार्यवराणां ममाध्यापकचरणानां श्रीयुक्त-पट्टाभिराम-शास्त्रि—शास्त्ररत्नाकर-विद्यासागर-पादानां** सतत-स्नेहाशीर्वादं स्मरता मया तमुद्दिश्य निवेद्यते गणनारहितः प्रणामाञ्जलिः।

मम सारस्वताग्रजस्य अत्यागसहनबान्धवस्य यादवपुर-विश्वविद्यालयप्राचार्यस्य डक्टर्-श्रीगोपिकामोहन-भट्टाचार्य-एम्-ए, डि-फिल्, काव्यन्यायतीर्थ-महोदयस्य अक्लान्तप्रचेष्टयैव ग्रन्थस्यास्य मुद्रणं सम्पादितम्। मयि तस्य स्निग्धसुन्दरमानुकूल्यं सततमेव स्मर्यते, निवेद्यते च तस्मै प्रणयसमुज्ज्वला आन्तरिकी कृतज्ञता।

प्रसंगे चास्मिन् मम सहकर्मिणां रवीन्द्रभारतीविश्वविद्यालयस्य कलाविभागाध्यक्षाणां डक्टर्-श्रीयुक्त-साधन-कुमार-भट्टाचार्य-एम्-ए, डि-फिल्-महोदयानां, संस्कृतविभागीयप्राचार्याणां श्रीयुक्त-ननीलाल-सेन-एम्-ए महोदयानां, वंगभाषाविभागीयप्राचार्याणां डक्टर्-श्रीयुक्त-अजितकुमार-घोषवर्मन्-एम्-ए,डि-फिल्-महोदयानाञ्च प्रोत्साहनं संलभ्य तेभ्यो बहुशो धन्यवादाः प्रदीयन्ते।

शोभनेऽस्मिन् ,कर्मणि ममाग्रजकल्पाः वर्धमानविश्वविद्यालय-प्राचार्याः श्रीयुक्त-सिद्धेश्वर-चट्टोपाध्याय-एम्-ए, काव्यतीर्थ-महोदयाः, संस्कृतसाहित्यपरिषत्सम्पादकाः श्रीयुक्त-सत्यरञ्जन-वन्द्योपाध्याय-एम्-ए,

महाभागाः, खृष्टीय-महिला-महाविद्यालय-संस्कृताध्यक्षाः श्रीयुक्त-रवीन्द्रनाथ-भट्टाचार्य-एम-ए,-वेदान्ततीर्थ-महाभागाः, परिषत्सदस्याः श्रीयुक्त-शक्तिप्रसाद-मुखोपाध्याय-महोदयाः, परिषत्ग्रन्थागारिकाः श्रीयुक्त मधुसूदन-काव्यतीर्थ-महाभागाः, परिषदध्यापकाः श्रीयुक्त-रामधन-काव्य-व्याकरण-पुराणतीर्थ-शास्त्रि-महोदयाश्च नानाविधं साहाय्यं कृत्वा मम धन्यवादपात्रतां गताः।

* ग्रन्थस्यास्य प्रकाशने विश्वभारतीकर्तृपक्षस्य सानन्दानुमतिर्मया कृतज्ञतापूर्वकं स्मर्यते।

वङ्गीयमूलस्वरसंयोगेन सङ्गीतानामनुशीलन-सौकर्यार्थं सङ्गीतादौ वङ्गभाषायाश्छन्द एवानुसृतम्। सर्वविधस्खलनं सहृदयैः कृपया क्षन्तव्यमिति मे प्रार्थना।

अधुना येषां खलु संस्कृतप्रणयिनां सन्तोषाय, साहित्यरसिकानाञ्च सन्तृप्तयें, रवीन्द्रकाव्यमधुपानाञ्च सम्मोदाय सुरवचसा रवीन्द्रकाव्यानुकल्पने क्षमताहीनदीनस्य ममायं प्रयासस्तेषां सरसहृदयेषु यदि ग्रन्थस्यास्य पाठेनानन्दसन्दोहो जायते, तदैवाऽहं सार्थकप्रयत्नो भविष्यामि। शेषत इदमेव मे वक्तव्यम्—

"आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्" इति शम्

श्री—ध्यानेश-नारायण-चक्रवर्ति-
साहित्यशास्त्रि-देवशर्मणः।

१३७१ वंगाब्दीयसौरवैशाखस्य पञ्चविंशदिवसीयम्
शुभरवीन्द्रजन्मवासरीयम्

रवीन्द्र-भारती-विश्वविद्यालयः
६।४ द्वारकानाथ ठाकुर लेन्
कलिकाता—७

* We are glad to communicate our approval to the publication of "Muktadhara" in Sanskrit by you.............. (Letter No.—Per/5192—19th August, 1963 Visva Bharati, Publishing Dept. Calcutta. )



RASHTRAPATI BHAVAN,
NEW DELHI-4.
राष्ट्रपति भवन,
नई दिल्ली-4

May 8, 1963.

Dear Sri Chakravorty,

I am glad to know that you are bringing out Dr. Tagore's works in Sanskrit I hope Sanskrit readers will find them useful.

With the best wishes,

Yours sincerely,

(S.Radhakrishnan)

Sri Dhyanesh Narayan Chakravar
132/5 Sarat Ghosh Garden Rd,ty
Calcutta-31.

PS: I am returning the MSS.

**Professor Suniti Kumar Chatterji, M.A. (Cal.)**
**D. Litt. (Rome) D. Litt. (London) F. A. S.**
**Bhasacarya, Padmavibhusana.**
Chairman, Legislative Council
West Bengal
Calcutta.
April 10, 1964.

Rabindranath is such a great poet that his works in addition to being translated in the modern languages of the world deserve to be enshrined in the hall of outstanding productions in the classical languages, if suitable renderings of his compositions can be made. Unquestionably, apart from a work like the Gita and the Upanishads and Kalidasa, Rabindranath is the only Indian writer who has been brought with in the purview of speakers of almost all the important languages of the world. Besides, like some of our other classics in the mediaeval and modern languages, quite a considerable selection of his poetical works has been rendered into the classical language of India also. The total output from Indian scholars of Sanskrit who have dressed the muse of Rabindranath in the garb of the classical speech of India would be quite considerable.

These translations are not all of the same merit. I, myself, am not competent to give comparative estimate of these. Here is one rendering from one of the most intriguing dramas of Rabindranath—the "Muktadhara"—a work entirely in the modern spirit, although is allegorical in form. Professor Dhyanesh Narayan Chakravarti, M.A., Sahitya-Sastri, who is lecturer in Sanskrit and Rabindra literature in the new University in honour of Rabindranath, which has been started in Calcutta

recently—the "Rabindra Bharati University" and is intimately connected with the spread of Sanskrit in Bengal through the Calcutta Sanskrit Sahitya Parishad, and is an active worker to have Sanskrit recognised as one of the official languages, has given expression to his practical zeal for Sanskrit by translating this drama of Rabindranath into the language of the Gods. Judging from a glance through his work, I think this is a very fine translation which gives the spirit as well as the form and linguistic beauty of the original. The composition is in a very simple style, as would be inevitable when we think of the original also. I am sure, lovers of Sanskrit will find real pleasure when they will peruse this work or dip into it. Prof. Chakravarti has to his credit another fine rendering of a similar allegorical drama by Rabindranath—one of his masterpieces, namely the "Dakghar" or "the Post Office". This was highly praised by many scholars of eminence. This Sanskrit translation of "Dakghar" was staged in Calcutta, and also played on the Radio, and this is very encouraging for modern Sanskrit studies and the development of a modern literature in Sanskrit.

I hope Prof. Chakravarti's translation will be received well by the interested scholarly world, and I wish him further success in this matter.

Suniti Kumar Chatterji.
Emeritus Professor, Calcutta University ;
Chairman, Government of India Sanskrit Commission (1956-57)
and Chairman, West Bengal Legislative Council.

**Sri Hiranmaya Vandyopadhyaya, I.C.S.**
Vice-Chancellor, Rabindra Bharati University.
Calcutta.

हिरण्मय वन्द्योपाध्याय

रवीन्द्रभारती-विश्वविद्यालयः
६।४, द्वारकानाथ ठाकुर लेन,
कलिकाता-७

२३शे डिसेम्बर, १९६२

मुक्तधारोपाधिकस्य रवीन्द्रनाथरचितस्य नाटकस्य श्रीध्यानेश-नारायण-चक्रवर्त्तिकृतः संस्कृतभाषायामनुवादो मया पठितः। उत्कृष्टोऽयमनुवादः। यथासम्भवमयं मूलस्यानुवर्ती सुखपाठ्यश्च। इयं सफलता चक्रवर्त्तिमहोदयानां संस्कृतभाषायामनन्यसाधारणीं व्युत्पत्तिं प्रमाणीकरोति। रवीन्द्रसाहित्यानुवादविषये महोदयाना-मनुरूपः प्रयासः सर्वथा प्रार्थनीयः।

हिरण्मय वन्द्योपाध्याय

**Professor Satkari Mukherjee, M.A., Ph.D.**
Ex-Ashutosh Professor, Calcutta University.
At present, Director, Navanalanda Mahavihar,
P. O. Nalanda.
Patna.
Date. 17-12-63.

It gives me pleasure to observe that Sri Dhyanesh Narayan Chakravortty, M. A., has rendered some of the dramas of Rabindra Nath Tagore into Sanskrit. Though Rabindra Nath does not stand in need of external aids to the propagation of his reputation, these translations help other people who are ignorant of Bengali to appreciate his genius. Regarded in this light Sri Dhyanesh Narayan deserves the gratitude of all right thinking persons. I am glad to observe that his Sanskrit is elegant and almost as sonorous as the original. I wish that he should continue his work in this line. He is entitled to recognition as an original Sanskrit writer. I wish him uninterrupted success in his mission.

Satkari Mukherjee,

**Mahamahopadhyaya Kalipada Tarkacarya**
Research Professor, Govt. Sanskrit College, Calcutta.

ॐ हरिरोम्

विश्वकवि-रवीन्द्रनाथ-कविसार्वभौम-प्रणीतस्य
मुक्तधाराख्य-रूपकस्य
संस्कृतानुवादप्रशस्तिः।

रवीन्द्रनाथेन कवीश्वरेण कृता प्रसिद्धा भुवि मुक्तधारा।
यस्या विचित्रेण रसेन धीरा विमुग्धचित्ता नियतं भवन्ति ॥ १
तां वङ्गभाषामयमुक्तधारां ध्यानेशनारायण-चक्रवर्ती।
अनूद्य वृन्दारकवाक्प्रपञ्चैर्महोपकारं जगतो व्यधत्त ॥ २
ये वङ्गभाषां न विदन्ति लोका विदेशजाताः सुरवाचि विज्ञाः।
अतःपरं ते किल मुक्तधारामास्वाद्य तृप्ताः सुतरां भवेयुः ॥ ३
प्रस्तावनास्मिन्ननुवादकेन स्वयं निवद्धा सुगमैर्वचोभिः।
यया भवत् संस्कृतरूपकस्य प्रपूर्तिरङ्गस्य विशेषभाजः ॥ ४
भाषानुवादे सुगमार्थसार्था माधुर्ययुक्ता च वुधप्रिया च।
कृष्टं यया संस्कृतपत्ररत्नमनूदितां तामनयत् प्रकाशम् ॥ ५
सङ्गीतकादावपि रम्यभाषा विपश्चितां तोषणमादधाति।
मूलानुगामी प्रकृतानुवादो मूलस्य नैवापचितो रसश्च ॥ ६
ध्यानेशनारायण-चक्रवर्ती प्रदर्शयामास परं कृतित्वम्।
अत्रानुवादे विवुधा हि येन प्रीतिं परां तत्र समाश्रयन्ते ॥ ७
गीर्वाणवाणी मधुरा तदास्यादनर्गलं संसदि लब्धजन्मा।
सामाजिकान् विस्मयमुग्धचित्तान् करोति शक्तिस्तुति वावदूकान् ॥८
नाट्यप्रयोगादिषु तस्य दाक्ष्यं सामाजिकान् प्रीणयति प्रकामम्।
रम्या गुणास्ते प्रकृतानुवादं भूरि प्रकर्षं किल नीतवन्तः ॥ ९
ध्यानेशनारायण-चक्रवर्तिनं गीर्वाणवाणीसुसमृद्धिसाधने।
चिरं रतं वीक्ष्य सुतृप्तचेतसा तमाशिषा वर्द्धयते विदां गणः ॥ १०
सुदीर्घमायुर्लभतां निरामयं स कर्मशक्तिं महतीञ्च विन्दतात्।
तस्य प्रयत्नेन सुपर्वभारती समृद्धिमायातु किलोत्तरोत्तरम् ॥ ११
एषोऽनुवादः प्रतिगेहचारी लोकान् विधत्तां सुरवाचि रक्तान्।
येनानुकूल्यं किल भारतेऽस्मिन् स्याद्राष्टभाषात्वविधौ हि तस्याः ॥१२

तदीयगुणमुग्ध—
( महामहोपाध्याय ) श्रीकालीपद-तर्काचार्य्यस्य
१६।३।६४

**Panditaraja Srijiva Nyayatirtha, M.A.**
Ex-Professor Calcutta University.
Principal, Bhatpara Sanskrit College

श्रीः

## प्रशस्तिपत्रम्

मुक्ताधारा रसानां तुहिनगिरिनिभाद् या रवीन्द्रात् कवीन्द्रात
सा श्रीध्यानेशनारायण-सुरवचसानूदिता "मुक्तधारा।"
शङ्खध्वानेन भागीरथकरकलितेनेव नीता प्रसारं
पीता सद्भिर्विधत्तां तरुणकवयितुः सा कृतिः कीर्तिभारम् ॥

सतत-शुभानुध्यायिना
भट्टपल्लीवास्तव्येन
श्रीश्रीजीवन्यायतीर्थदेवशर्मणा
प्रदत्तम् ॥

Sastraratnakara, Vidyasagara, Vidyavacaspati.
P. N. Pattabhiram Sastri
Reader in Sanskrit,
University of Calcutta

1, Deshapriya Park Road
Calcutta-26
27. 10. 63

श्रीः

श्रीध्यानेशनारायण-चक्रवर्तिमहोदयेन रवीन्द्रभारती-विश्वविद्यालयाध्यापकेन विरचितं 'मुक्तधारा' नामकं नाटकं मया विलोकितम्। इदञ्च जगति लब्धप्रतिष्ठानां कविकुलललामभूतानां श्रीरवीन्द्रमहोदयानां "मुक्तधारायाः" संस्कृतानुवादरूपम्। श्रीरवीन्द्रनाटकस्यायं संस्कृतानुवाद इदम्प्रथमतया श्रीचक्रवर्तिमहोदयेन कृतः। यादृशी शैली श्रीरवीन्द्राणां तामेव यथायथमवलम्ब्य सरसैर्मधुरैश्च शब्दैर्विरचितमिदं मनीषिणां मनांस्यावर्जयतीति सुदृढ़रूपं विश्वसिमि। संस्कृतभाषया नाटकादिलेखनक्रमो बहोःकालाल्लुप्तप्रायेऽस्मिन् समय एतादृशग्रन्थानामाविष्कारस्सुसंस्कृतप्रचाराय संस्कृतसमाजाय च महते लाभाय स्यादिति सम्भावयामि। भाषान्तरे विद्यमानानां योग्यानां ग्रन्थानां संस्कृतानुवादे प्रवृत्तिशीलानामीदृशानां विदुषां प्रोत्साहनाय सर्वकारः अन्ये च संस्कृतानुरागिण आढ्या यदि ग्रन्थानामीदृशानां प्रकाशने दत्तचित्ता भवेयुस्तर्हि संस्कृतवाङ्मयस्य सुमहत्परिवर्द्धनं पोषणञ्च स्यादिति तर्कयामि। शोभनेऽस्मिन् कर्मणि प्रवृत्तिमावहन्तं श्रीध्यानेशमहोदयं हृदयेन प्रशंसमानो मदीयामिष्टदेवतामभ्यर्थये—यदयं पण्डितवरो भूयोभूयः परिश्रम्यैतादृशानि शुभानि कार्याणि कुर्वाणश्चिरं नीरोगदृढ़गात्रस्सुसुखेन जीयादिति।

पी. एन्. पट्टाभिरामशास्त्री

## PROEM

"Muktadhara" was written at Santiniketan in January, 1922. After spending a week in his house-boat on river "Padma", the poet returned to Santiniketan and immediately commenced writing this playlet which he finished on the 13th January, 1922. In a letter to a friend the poet wrote—"I had been busy the whole week writing a drama. I have finished it. So, now, I am free."

The theme of this playlet deals with the struggle of the peasants of the village Shivtarai against the culculated act of tyrrany of the king of Uttarkut who had stopped their water-supply by the construction of a dam near the spring "Muktadhara. The king wanted to punish the turbulent villagers of Shivtarai who had refused to pay him taxes as they did not get good harvest a number of years. The villagers of Uttarkut were delighted with the king's cruel measures against the villagers of Shivtarai. They were full of praise of Bibhuti, the chief mechanic of the king, who had built the dam.

The king wanted to assert his royal power and Bibhuti, the mechanic, wanted to prove the excellence of the machine that represented the impersonal mechanical power, invented by man. He did not care if crops of the villagers of Shivtarai would perish for lack of water, and men would die from hunger. Boastingly he asserted :—"My dam cannot be toppled down by the current of water, and my machine cannot be moved by the flood of tears. My machine is at war with the forces of nature, curses heaped upon it by men are of no consequence".

Against these forces—the heartless and covetous state-power and the soulless impersonal power of the

machine—Prince Abhijit pitted his force of humanism, love and sympathy for the people ground down by the demon of power aided by the force of machine.

The prince knew the weak spot in the construction of the dam. He resolved to demolish the dam so that the waters of "Muktadhara" may once again flow in the fields of Shivtarai. The king tried to disuade him from this, but he failed to do so and he imprisoned the prince. The followers of the prince set fire to the prison camp so that the prince may escape from his captivity. In the dark night the prince reached the dam, hit the weak spot of the dam and broke it. The dam gave away the waters of "Muktadhara", imprisoned solong, once again flowed in mighty current—but prince Abhijit was carried away by the flood.

In a letter to a friend the poet wrote the following about his playlet—"Machine is hurting life. So, Abhijit smashed the machine, but not by the power of machine but by sacrificing his own life. A terrible tragedy lurks in the activities of those who hurt man by machine. Because, the humanism, they try to destroy is also to be found in them. Their own machine is hurting the inner man within them. Abhijit of my playlet is the oppressed inner man lying hidden in the heart of the oppressor. He has sacrificed his life in order to be free from the tyranny of his own machine."

Rabindra Nath had observed with keen regret the orgies of chauvinism throughout the world. He considered nationalism as the manifestation of tribalism, responsible for the mounting hatred, conflict, bloodshed and the mutilation of humanity.

The poet was by no means against science or machine. But, he was wholly against the untramalled autocracy of the machine. Machine must own its allegiance to Universal humanism. "Knowing must come under the control of Being," if truth is to be realised.—he said.

This playlet is replete with superb dialogues of great suggestiveness. The intensity of the emotional texture of the playlet and its restraint and simplicity make the play a thing of great literary excellence and beauty.

During the birth centenary celebration of the poet in 1961, the Citizens' Centenary Committee, Calcutta, had hit upon the happy idea of rendering some dramas and songs of Rabindranath in Sanskrit. This idea suggested by the Committee was enthusiastically accepted by two young professors who are Sanskrit scholars. Two playlets—The "Post office" and the "Chariot of time" were rendered in Sanskrit by Professor Dhyanesh Narayan Charkravarty, Sahity-Sastri of Rabindra-Bharati University and by Professor Bimal Krishna Matilal of the Sanskrit College, respectively. The plays were staged and were greatly appreciated by a distinguished audience.

Professor Dhyanesh Narayan Chakravarty has now translated the "Muktadhara" in Sanskrit. I am certain that it will have a warm reception from the lovers of literature throughout India. The translation is true to the original and is moreover excellent.

I earnestly hope that Professor Chakravorty will continue this great work of rendering Gurudeva's works in Sanskrit and thereby advance the cultural integration of the people of India.

20th October, 1963. **Saumyendranath Tagore**
4 Elgin Road

# भूमिका

( १ )

ईशवीय-द्वाविंशत्युत्तरोनविंश-शतकस्य 'जानुयारी'-मासि शान्ति निकेतने विरचिता "मुक्तधारा"। पद्मेति तटिम्याः वक्षसि नौगृहे सप्ताहपरिमितकालमुषित्वा शान्तिनिकेतनं प्रत्यागत्यैव कविर्नाटकमिदं प्रणेतुमारब्धवान्। ईशवीय-द्वाविंशत्युरोनविंशशतकस्य जानुयारी-मासस्य त्रयोदशदिवसे तेन च परिसमाप्तं नाटकम्। "समग्रं सप्ताहं व्याप्य कस्यचिन्नाटकस्य विरचने निमग्नोऽहमासम्। मया च तत् समाप्तिं नीतम्। अतोऽहमद्य मुक्तः सञ्जातः।"—इत्येवं बान्धव-मेकमुद्दिश्य कविना कस्यांचित् लिपिकायां लिखितम्।

बन्धनमेकं निर्माय शिवतलाधिवासि-कृषीवलानां जलप्रवाहो निरुद्धीकृत उत्तरकूटाधिपतिना। तेन राज्ञा सुपरिकल्पित-निपीड़नम-भिलक्ष्य तत्रत्यानां- कृषीवलानां संग्राममवलम्ब्य विरचितेयं नाटिका। कतिवर्षाणि यावत् सुशस्यमप्राप्य यदा ते राजस्वप्रदानम् अस्वीकृत-वन्तस्तदा राजा पल्लीवासिनस्तान् अशान्तान् दण्डयितुमैच्छत्। शिवतलाधिवासिनः प्रति राज्ञो निर्ममं निपीड़नं संलक्ष्य उत्तरकूटाधि-वासिनस्तु हर्षंगताः। बन्धन-निर्माणकारिणं विभूतिनामधेयं राज्ञो मुख्ययन्त्राधिकारिकं ते नितरां प्रशशंसुः।

राजा तस्य राजशक्ति यन्त्राधिकारिकं विभूतिञ्च नियोक्तुमभिलषन् मनुष्याविष्कृतं यन्नैर्व्यक्तिकं यन्त्रवलं, तस्यैव प्रकर्षं प्रमाणयितुं चेष्टयामास। शिवतलाधिवासिनां कृषिफलस्य जलाभावेन विनाश-स्तेन च क्षुधया जनानामपि मरणं तेन मनागपि न परिगणितम्। "मत्कल्पितं बन्धनं जलस्रोतसा न ध्वांसयितुं शक्यते, अश्रुप्रवाहेण च मे यन्त्रं नापि शक्यते प्रचालयितुम्। प्राकृतिक-शक्तिनिचयेन सह यन्त्रस्य मे संग्रामः। मनुष्योत्सृष्टेण पुञ्जीभूतेनाभिशापेन नासाद्यते किमपि फलमिति" स सदर्पमुद्घोषयामास। एतासां शक्तीनां प्राति-कूल्येन—हृदयहीनायाः लुब्धायाश्च राष्ट्रशक्तेस्तथा च निरात्मिकायाः

नैर्व्यक्तिकयन्त्रशक्तेश्च विरुद्धतया युवराजोऽभिजित् यन्त्रशक्तिपरिपुष्ट-दानवबल-निपीड़ित-जनानां कृते तस्य मानवतायाः प्रेम्णः सहानुभूतेश्च शक्तिं प्रतिष्ठितवान्।

वन्धन-निर्माणकाले यद् दुर्बलस्थानमासीत्, तत्तु युवराजोऽजानात्। शिवतलस्य क्षेत्रेषु मुक्तधारायाः जलधारा यथा पुनःप्रवाहिता भवति एतदर्थं स बन्धनं विध्वंसयितुं स्थिरीकृतवान्। राजा तम् अस्मात् निवर्तयितुमचेष्टत। पुनर्व्यर्थः सन् स युवराजं कारायामक्षिपत्। कारावन्धनात् युवराजस्य पलायने सुयोगदानाय तस्यानुगामिनः कारागृहे अग्निसंयोगं कृतवन्तः। गभीरे निशीथे युवराजो वन्धन-स्थलमुपगम्य तस्य दुर्वलस्थानमाहत्य तद् विध्वस्तवान्। एवं प्रवाहस्य वन्धनबाधा दूरीभूता। एतावत्कालं यावत् निरुद्धो मुक्तधारायाः जलराशिः महता स्रोतसा पुनःप्रवाहितः। तेन स्रोतसा अभिजिदपि अपवाहितः।

"यन्त्रमाहन्ति जीवनम्। अतोऽभिजित् न तु यन्त्रशक्त्या, अपितु स्वजीवनोत्सर्गेण यन्त्रं विध्वस्तवान्। ये तावद् यन्त्रेण मानवं पीड़यन्ति, तेषां कार्येषु भीषणो दुर्विपाकः प्रच्छन्नरूपेण तिष्ठति। यतो, यां मानवतां ते विनाशयितुं चेष्टन्ते, सा तु मानवता तेष्वपि दृश्यते। तेषां स्वकीयं यन्त्रं तेषामेव अन्तःस्थितं मानवात्मानं पीड़यति। मम नाटकीयपात्रविशेषोऽभिजिदेव निपीड़क-हृदये प्रच्छन्नः स्थितः स हि पीड़ितो मानवात्मा। तस्य स्वकीययन्त्रस्यैव पीड़नात् मुमुक्षुः स जीवनम् उत्सृष्टवान्"—एतत्तु सुहृदमेकमुद्दिश्य कविसार्वभौमेण पत्रे लिखितम्।

निखिले जगतीतले संकीर्णजातीयतायाः उन्मत्तोल्लासं रवीन्द्रनाथो महता दुःखेन परिलक्षितवान्। विवर्धमान-विद्वेषस्य, संगरस्य, शोणितपातस्य तथा मानवतायाः निपीड़नस्य च कारणभूता या गोष्ठी-परतन्त्रता, तस्या एव विकाशरूपा खलु सा जातीयता इति सोऽचिन्तयत्।

विज्ञानस्य यन्त्रस्य च विरोधी नासीत् कदापि कविवर्यः। किन्तु यन्त्रस्य दुर्निवारस्य आधिपत्यस्यव स खल्वासीत् सर्वथा प्रतिकूलवादी। सार्वभौम-मानवतासकाशे यन्त्रेण नूनं वश्यता स्वीकरणीया। सत्योपलब्धये ज्ञानन्तु कर्मणः स्वाधिकारे निश्चितमेव समागच्छेदित्येव प्रोक्तं तेन।

गभीरव्यञ्जनागर्भैरुत्तमसंलापैः, संयमेन, सारल्येन च भूषितं नाटकमिदं सुषमामण्डित-सुमहत् काव्यपदवीमारूढ़मिति मन्ये।

ईशवीयैकषष्ट्युत्तरोनविंशशतके कविवर्यस्य जन्म-शतवार्षिक-महोत्सवम् उपलक्ष्य कलिकाता-केन्द्रीय-नागरिक-समिती रवीन्द्रनाथ-विरचितानां कतिचिन्नाटकानां गीतानाञ्च संस्कृतेनानुवाद-निर्माणाय परिकल्पनां कृतवती। समितिकल्पिता एषा परिकल्पना तरुण-संस्कृताध्यापकद्वयेन साग्रहं परिगृहीता। रवीन्द्रभारती-विश्व-विद्यालयाध्यापकेन, समितिसदस्येन श्रीमता ध्यानेश-नारायण-चक्रवर्ति-शास्त्रिणा "डाकघर" इति नाटकस्य "वार्तागृहम्" इति नाम्ना संस्कृतभाषया अनुवादो विहितः। अनन्तरं संस्कृतमहाविद्यालयाध्यापकेन श्रीमता विमलकृष्णमतिलालेन "रथेर रशि" इति नाटकस्य "रथरज्जुः" इति नाम्ना संस्कृतानुवादः कृतः। संस्कृतेनानूदितम् एतन्नाटकद्वयं बहुशोऽभिनीतं विदग्धैर्दर्शकैश्चाभिनन्दितम्।

अध्यापकप्रवरेण श्रीमता ध्यानेश-नारायण-चक्रवर्तिना पुनरधुना "मुक्तधारा" इति नाटकं संस्कृतभाषया अनूदितम्। निखिले भारते साहित्यरसिकैरयमनुवादो नूनं नितरामभिनन्दितो भविष्यतीति सुदृढ़ो मे आशयः। मूलानुसारी चायमनुवादोऽतितरामुत्कर्षमुपगतः। भारतीयजनानां सांस्कृतिक-संहति-साधनार्थं गुरुदेव-रवीन्द्रनाथ-विरचितानां रचनानां संस्कृतेनानुवादे अध्यापक-चक्रवर्तिमहोदयो निरतस्तिष्ठत्विति मे ऐकान्तिकी कामनेति—

श्रीसौम्येन्द्रनाथ-ठाकुरस्य

अक्टोवरमासस्य विंशदिवसः, १९६३
४ संख्यक एलगिन् रोड, कलिकाता।

# मुक्तधारा

## प्रस्तावना

( नान्दी ) यः काव्यैः(?)मणि-माल्य-गीति-कमलैः सम्पूज्य वागीश्वरीं
लेभे विश्वजनार्घ्यरत्नममलं कीर्तिस्रजा मण्डितः ।
प्राच्यं पश्चिमकं प्रदीप्य किरणैर्योऽभूत् सतां वन्दित-
स्तं वन्दे कविसार्वभौममनिशं नाथं रवीन्द्राह्वयम् ॥

रवीन्द्रनाथः कविसार्वभौमको
गिरां पतिर्यः कविकुञ्जकोकिलः ।
अपास्तमृत्युः सितकीर्तिमण्डनो
विभातु शश्वद् वसुधा-प्रदीपनः ॥

सूत्रधारः—अहो आनन्दो नु आनन्दः । प्रागेव सर्वकर्मनिपुणां मनोरमां नटीं मे आह्वयामि ।

( मञ्चस्य पार्श्वैकदेशं गत्वा ) आर्ये, यदि नेपथ्यविधानम् अवसितमित-स्तावदागम्यताम् ।

नटी—( प्रविश्य ) आर्य, किमर्थमाहूतास्मि ? कः सन्देशः ?

सूत्रधारः—प्रिये, अद्य खलु तावत् कविसार्वभौमस्य रवीन्द्रनाथस्य जन्म-शतवार्षिकीमुपलक्ष्य तेनैव महाकविना विरचितस्य मुक्तधारेति प्रख्यात-नाटकस्य संस्कृतानुकल्पनमस्माभिः कलिकातासंस्कृतसाहित्य-परिषत्-सदस्यैरभिनीयते ।

नटी—आर्य, कथं संस्कृतानुकल्पनं, केन वानूदितं तत् ?

सूत्रधारः—कविसार्वभौमेण तस्य जीवनसाधनायां काव्यसाधनायाञ्च या खलु शाश्वती भारतीया संस्कृतिर्वन्दिता नन्दिता प्रचारिता च, सा तु संस्कृत-

भाषाश्रिता। परन्तु, इयं सुरवाणी सामग्रिकभारतीयसंस्कृतेश्चिरन्तनी धात्री। निखिलभारतस्य सर्वेषां प्रदेशानां वन्धनरज्जुरियं सुरभारती विश्वभाषारूपेणापि स्वीकृता।

नटी—बुद्धं मया सर्वमेव। अतः खलु भारतवर्षस्य प्राचीनमनीषिणः श्रीमच्छंकराचार्य-श्रीचैतन्यदेवप्रमुखा अस्माकं पूर्वसूरयः निखिले भारते संस्कृतभाषयैव तेषां भावधारां प्रचारितवन्तः।

सूत्रधारः—नूनमेव। अतो निखिले भारते तथाखिले जगतीतले रवीन्द्रभावधाराप्रचारणेऽपि संस्कृतमेव योग्यतमा भाषा। अतः खलु—

तत्काव्यं मधुनिर्भरोपममिदं विद्वज्जनानन्ददं
चित्वा वै करुणारसैककथिकां भावोच्छलां मर्मणः।
चक्रे संस्कृतभाषयानुरचितं नाट्यानुवादं कवेः
श्रीविश्वेश्वरशर्मदीनतनयो ध्यानेशनारायणः॥

[ इति प्रस्तावना ]

[ उत्तरकूटः पार्वत्यप्रदेशः। तत्रैव उत्तरभैरव-मन्दिरं प्रति प्रसारितः पन्थाः। विदूरे गगनमार्गे कस्यचिदभ्रभेदि-लौहयन्त्रस्य शीर्षदेशः सन्दृश्यते। ततश्चापरस्यां दिशि दृश्यते भैरवमन्दिरशिखरस्य त्रिशूलम्। मार्गस्य पार्श्वेत आम्रकानने राज्ञो रणजितः शिविरसन्निवेशः। अमावस्यायामद्य भैरवमन्दिरे भविष्यति आरात्रिकम्। राजा पदव्रजेण तत्र गमिष्यति; पथि शिविरे विश्रामं लभते। तस्य सभायाः यन्त्रराजो विभूतिः वहुवर्षव्यापिन्या प्रचेष्टया लौहयन्त्रेण वन्धनं निर्माय मुक्तधाराख्यां स्रोतस्विनीं रुद्धवान्। अतुलनीयामिमां कीर्तिं पुरस्कर्तुम् उत्तरकूटाधिवासिनः सर्वे उत्सवार्थं भैरवमन्दिरप्रांगणं प्रति प्रचलन्ति। भैरवमन्त्रदीक्षिताः सन्न्यासिनः अखिलं दिवसं स्तवगीतिं गायन्त. परिभ्रमन्ति। तेषां कस्यापि करे धूपाधारे प्रज्वलति धूपः, कस्यापि हस्ते शङ्खः; गानस्य अन्तरान्तरं कस्यापि हस्ते ध्वनति च घण्टा तालपूर्वकम्। ]

( गानम् )

जयतु भैरव ! जयतु शंकर !
जयतु जयतु प्रलयंकर
शंकर शंकर !
जयतु संशयभेदन
जयतु बन्धनच्छेदन
जयतु संकटसंहर
शंकर शंकर !

[ पूजार्थं नैवेद्यं संगृह्य प्रविशति कश्चिद् वैदेशिकः । उत्तरकूटस्य नागरिकं स पृच्छति । ]

पथिकः—आकाशतटमभि किमिदं निर्मितम् ? दर्शनादस्य भीतिः समुत्पद्यते ।

नागरिकः—नैतज्जानासि ? मन्ये वैदेशिकस्त्वम् । एतत्तु यन्त्रम् ।

पथिकः—यन्त्रमिदं किमर्थं विरचितम् ?

नागरिकः—पञ्चविंशतिवर्षाणि व्याप्य अस्माकं यन्त्रराजेन विभूतिना यन्निर्मितं तदेव समाप्तीकृतम्, तदर्थमेवाद्य उत्सवविशेषः ।

पथिकः—यन्त्रेण किं प्रयोजनम् ?

नागरिकः—मुक्तधाराख्या निर्झरिणी तेनैव निरुद्धा ।

पथिकः—अहो, असुरस्य मुण्डमिव तत् दृश्यते. नास्ति मांसम्, आनतश्चास्य हनुदेशः । युष्माकम् उत्तरकूटस्य शीर्षोपान्ते इत्थं मुखव्यादानं कृत्वा दण्डायमानं तिष्ठति । अहर्निशं तु विलोक्य युष्माकं प्राणपुरुषो विशुष्कं काष्ठमिव संजनिष्यते ।

नागरिकः—अस्माकं प्राणपुरुषः सुदृढ एव वर्तते । तन्नास्ति चिन्ताकारणम् ।

पथिकः—तदेव भवेत् । अपि तु न हि समुचितस्तपनतारकाणां पुरतश्चास्य सम्प्रसारः ; एतद्धि समाच्छादनीयम् । न पश्यसि किम् , अहोरात्रम् कृत्स्नम् आकाशमण्डलं रोषयतीति ?

नागरिकः—तद् भद्र! भैरवस्य आरात्रिकमालोकयितुं किमद्य न गमिष्यसि?

पथिकः—आरात्रिकदर्शनार्थमेव मया वहिर्गतम्। प्रतिवर्षम् अस्मिन्नेव समये मया आगम्यते। किन्तु, मन्दिराद् ऊर्ध्ववर्तिनि गगनमण्डले ईदृशः प्रतिरोधो न कदापि मया दृष्टः। हठाच्चैतत् पश्यतो मे रोमहर्षः सञ्जातः। मन्दिरशीर्षं यदनेन उल्लङ्घितं तन्मे स्पर्धैव प्रतिभाति। यातु, नैवेद्यमुपनीय प्रत्यागच्छामि। किन्तु, मनो मे न हि प्रसीदति। (प्रस्थानम्)

[ काचिन्महिला प्रविशति। शुभ्रमुत्तरीयमेकं तस्य मस्तकं परिवृत्य सर्वाण्यङ्गानि च समावृत्य भूतले लुठति। ]

नारी—सुमन, वत्स सुमन! (नागरिकं प्रति) वत्साः, सुमनो मे नाद्यापि प्रत्यागतः।

नागरिकः—कासि त्वम्?

नारी—अहन्तु जनाइ-ग्रामस्य अम्वा। स तु मम नयनालोकः, मम प्राणानां निःश्वासः, मम सुमन!

नागरिकः—भोः, तस्य किं सञ्जातम्?

अम्वा—कुत्र स नीतः, नाहं जानामि। पूजार्थं मया भैरवमन्दिरं गतम्—प्रत्यावृत्याहं पश्यामि नास्ति सः, कुत्रापि नीत इति।

नागरिकः—तर्हि मुक्तधारायाः प्रतिरोधरचनार्थं स नीतो भवेत्।

अम्वा—मया तु श्रुतम्—अनेन पथा स नीतः—अस्मात् गौरीश्रृङ्गात् पश्चिमतः—तत्र दृष्टिर्मे न संगच्छति परतश्च तस्मात् न हि दृश्यते मार्गान्तरम्।

नागरिकः—अलं विलापेन। आरात्रिकं द्रष्टुकामा वयं भैरवमन्दिरं प्रचलामः। अद्यास्माकम् आनन्दमयोऽवकाशः, त्वमपि तावदागच्छ।

अम्वा—न हि तात, पुरैकदा भैरवस्य आरात्रिकं द्रष्टुमहं गतवती। किन्तु, तद्दिनादेव पूजार्थं गमने चित्तं मे आशङ्कते। श्रूयतां, त्वामहं कथयामि—अस्माकमर्चनम् देवसकाशं न गच्छति। पथि एव तद् अपह्रियते।

नागरिकः—केन?

अम्बा—येन अपहतो मे वत्सः सुमनस्तेनैव। कोऽसाविति नाधुना मयोपलब्धम्। सुमन, तात सुमन, मम वत्स सुमन! (उभयोः प्रस्थानम्)

[ अभिजित् इति नामकेन उत्तरकूटयुवराजेन यन्त्रराजं विभूतिं प्रति प्रेषितः कश्चिद् दूतः। विभूतिर्यदा मन्दिरं प्रचलति तदैव दूतेन सह तस्य साक्षात्कारः। ]

दूतः—यन्त्रराज, युवराजेन प्रेषितोऽस्मि।

विभूतिः—कस्तस्य आदेशः?

दूतः—एतावत्कालम् अस्माकं मुक्तधारानिर्झरिणीम् अवरोधयितुम् त्वं बन्धनिर्माणे प्रवृत्तोऽसि। पुनः पुनस्तद्बन्धनं भग्नं जातं, तेन बहवो जनाः धूलिवालुकाभिरवरुद्धाः समाधिं गताः, कति कति च प्लावनात् स्रोतसा दूरं नीयमाना विलयं गताः। अद्यत्वे तु अन्तिमे मे—

विभूतिः—तेषां प्राणोत्सर्गो न कदापि व्यर्थीभूतः। अवसितं मे बन्धनिर्माणम्।

दूतः—शिवतलाधिवासिनः प्रजाजना नाधुनापि वार्तामिमां जानन्ति। देवतया यज्जलं तेभ्यः कृते प्रवाहितं, केनापि मनुष्येण तन्निरुध्यते इति विश्वसितुमपि ते न कदापि शक्नुवन्ति।

विभूतिः—दैवतेन तेभ्यः केवलं जलमेव प्रदत्तम्, मह्यं तु प्रदत्ता स्रोतो-बन्धनार्थं शक्तिः।

दूतः—ते हि निश्चिन्ता वर्तन्ते, न जानन्ति यत्—सप्ताहानन्तरमेव तेषां कृषिक्षेत्रम्—

विभूतिः—कृषिक्षेत्रमुल्लिख्य किं वक्तुमिच्छसि?

दूतः—तस्य क्षेत्रस्य विशुष्कीकरणमेव किं न ते बन्धननिर्माणे लक्ष्यभूतमासीत्?

विभूतिः—वालुका-प्रस्तर-जलानां षड्यन्त्रं व्यर्थीकृत्य मनुष्यबुद्धिस्तु विजयतामिति मे उद्देश्यमासीत्। किं च कस्यापि कृषीवलस्य किमपि यवक्षेत्रम् विनष्टं भविष्यतीति तदा नासीन्मे चिन्तावकाशः।

दूतः—युवराजः पृच्छति किमधुनापि चिन्ताकालो नायात इति ?

विभूतिः—न हि, यन्त्रशक्तेर्महिमैव मया चिन्त्यते ।

दूतः—क्षुधार्तस्य क्रन्दनेन किं सा चिन्ता न विदीर्णा भविष्यति ?

विभूतिः—न हि, जलवेगेन वन्धनं मे न कदापि भग्नीभवति, क्रन्दन-प्रभावेणापि यन्त्रं मे न विचलति ।

दूतः—किं नास्ति ते अभिशापभयम् ?

विभूतिः—अभिशापः ? शृणु तावत्, उत्तरकूटे यदा श्रमिकाणाम् अभावः सञ्जातस्तदा राजादेशेन चण्डपत्तनस्य प्रतिगृहादेव अष्टादशोर्द्ध्ववयस्कास्तरुणाः समानीताः । तेषां तु वहव एव न प्रत्यागताः । तत्रत्यानां कति कति मातॄणामभिशापं व्यर्थीकृत्य यन्त्रं मे विजयते । दैवशक्त्या यो युध्यते, मनुष्याभिशापात् किं स विभेति ?

दूतः—युवराजेनोक्तम्—कीर्तिप्रतिष्ठाया गौरवन्तु संलब्धमेव । अधुना आत्मनः कीर्तिभङ्गस्य यदधिकतरं गौरवं तदेवाधिकुरुष्व ।

विभूतिः—कीर्तिप्रतिष्ठा यावत् न समाप्ता तावदासीत् चैषा मदायत्ता । अधुना सा उत्तरकूटवासिनां सर्वेषामेव अधिकारभूता । अतो नास्ति मे नाशनाधिकारः ।

दूतः—युवराजेनोक्तम्—विनाशाधिकारस्तेनैव ग्रहीष्यते ।

विभूतिः—उत्तरकूटस्य युवराजः स्वयमेव एवं ब्रवीति ? न किमस्मदीयस्तत्रभवान् ? किमसौ शिवतलपक्षीयः ?

दूतः—तेनोच्यते—उत्तरकूटे न केवलं यन्त्रस्य राजत्वम्—तत्र देवतापि विराजते—इति निश्चितमेव प्रमाणयितव्यम् ।

विभूतिः—यन्त्रस्य अधिकारेण देवतापदं स्वयमेव ग्रहीष्यामीति प्रमाणभारो ममैव । उच्यतां युवराजः, यत्—मम बन्धनयन्त्रस्य मुष्टिपरिमितस्यापि अंशस्य ईषदुन्मोचनार्थं मया न कोऽपि उपायो विहित इति ।

दूतः—यः खलु देवो ध्वंसस्य कर्ता, स हि प्रशस्तपथेन सदैव न प्रचलति । वर्तन्ते तस्य ये तावद्रन्ध्रपथास्तेषु न केषामपि दृष्टिर्निपतति ।

विभूतिः—( भीतः सन् ) रन्ध्रम् ? तत्तु किम् ? कां तावद् रन्ध्रस्य वार्तां त्वं जानासि ?

दूतः—किमहं जानामि ! यस्य प्रयोजनं स एव ज्ञास्यति । ( प्रस्थानम् )

[ उत्तरकूटस्य नागरिका उत्सवार्थं मन्दिरं गच्छन्ति । ]

( विभूतिं दृष्ट्वा )

प्रथमो नागरिकः—भो यन्त्रराज, चतुरोऽसि त्वम् । कदा तु चातुरीबलेन प्रागेव समागतोऽसि इति किञ्चिदपि मया न ज्ञातम् ।

द्वितीयः—तस्मिन् कर्मणि तु स चिरमेव अभ्यस्तः । अन्तरालमधिष्ठाय शनैः शनैः प्रसृत्य कदा स सर्वान् अतिक्रम्य गच्छतीति न ज्ञायते । सोऽसौ अस्माकं चवुयाग्रामस्य मुण्डितो विभूतिः, अस्माभिः साकमेव कैलास-गुरुसकाशात् कर्णपीड़नमनुप्राप्य कदा तु अस्मान् सर्वानतिक्रम्य ईदृशं सुमहत् कार्यं साधितवान् !

तृतीयः—रे गव्रो, मञ्जूषाहस्तः कथं विमूढो दण्डायमानस्तिष्ठसि? प्रत्यक्षतः किं विभूतिस्त्वया न कदापि दृष्टः ? आनीयन्तां माल्यानि, तैर्भूषयामि तावत् ।

विभूतिः—आस्तां तावत् । नातः परं प्रयोजनम् ।

तृतीयः—नातः परं किम् ? अकस्मात् त्वमतीव महान् एव संवृत्तः । अतो यदि ते ग्रीवादेशः उष्ट्रकण्ठमिव सुदीर्घः अभविष्यत्, उत्तरकूटवासिनश्च सर्वे सम्मिलिताः सन्तस्तव कण्ठोपरि माल्यभारं समार्पयिष्यन्, तदा तु सुष्ठु एव अभविष्यत् ।

द्वितीयः—भ्रातः, ढक्कावादनकारी हरिशस्तु नाधुनापि समागतः ।

प्रथमः—दुष्टोऽसौ अलसानां नायकः—तस्य पृष्ठचर्मणि यदि ढक्काघातः प्रदीयते, तदा—

तृतीयः—अलमनेन । ढक्कायां तालप्रदाने तस्य हस्तौ अस्मत्-करयुगलात् दृढतरौ ।

चतुर्थः—सामन्तस्य विश्वस्य रथं संप्रार्थ्य समानीय अद्य मे अग्रजोपमस्य

विभूते रथयात्राम् उद्यापयिष्यामि इति मे मनसि प्रकल्पितमासीत्। किन्तु श्रूयते नरपालोऽपि पदव्रजेनाद्य मन्दिरं गमिष्यति।

पञ्चमः—साधु साधु। सामन्तस्य रथस्य या खलु दशा। स हि रथो दशरथकल्पः—अकस्मात् मार्गमध्ये दशधा विभक्तो भवति।

तृतीयः—हाः हाः हाः! दशरथम्। अस्माकं लम्बुः प्रायशः सुष्ठु भणति। दशरथम्!

पञ्चमः—किं मया विना कारणमेव ईदृशमुच्यते। पुत्रस्य मे विवाहकाले तं रथं संप्रार्थ्य अहम आनीतवान्। यावदारोहितं, तस्मादधिकतरं कृतं रज्जु-समाकर्षणम्।

चतुर्थः—तावत् क्रियतामिदम्। विभूतिं स्कन्धोपरि संस्थाप्य नयामः।

विभूतिः—अरे, अरे; किं क्रियते, किं क्रियते!

पञ्चमः—नहि, नहि, इदमेव काम्यते। उत्तरकूटस्य क्रोडे तव जन्मग्रहणम्। अपि तु, त्वमद्य तस्य स्कन्धदेशं समारूढोऽसि। किञ्च, मस्तकं ते सर्वान् अतिक्रम्य ऊर्द्ध्वं गच्छति।

[ स्कन्धोपरि दण्डान् सज्जीकृत्य तदुपरि विभूतिम् उत्तोल्य ]

सर्वे—विजयतां यन्त्रराजो विभूतिः। विजयतां यन्त्रराजो विभूतिः।

( गानम् )

यन्त्राय नमो नमः, यन्त्राय नमो नमः, नमामो यन्त्र।
चक्रमुखर-मन्द्रितस्त्वं हे वज्रवह्निवन्दित।
त्वं वस्तु-विश्व-वक्षोदंशः, ते ध्वंस-विकट-दन्तः॥
त्वं दीप्त-वह्नि-शत-शतघ्नी-विघ्न-विजय-पन्थाः (?)।
लौहगलन-शैलदलनस्तवाचल-चलनो मन्त्रः॥
कदा काष्ठेष्टक लोष्ट्रकदृढ-घन-पिनद्ध-काया।
भूतल जल-व्योममण्डल-लङ्घनलघु-माया॥
तव खनि-खनित्र-नख-विदीर्णा क्षितिविकीर्णान्त्रा।
तव पञ्चभूत-बन्धनकरा इन्द्रजालतन्त्राः॥

[ विभूतिना सार्कं सर्वे प्रस्थिताः। उत्तरकूटाधिपतिः रणजित्, तस्य च मन्त्री शिविरसन्निवेशात् मञ्चं प्रविशतः। ]

रणजित्—शिवतलस्य प्रजागणान् केनाप्युपायेन वशीकर्तुं नाशक्नोस्त्वम्। व्यतीतेषु एतेषु दिनेषु मुक्तधाराजलमायत्तीकृत्य तान् वशीकर्त्तुमुपायो विभूतिना प्रदर्शितः। किन्तु, मन्त्रिन्, त्वयि तु तावत् न लक्ष्यते तादृशः समुत्साहः। किमत्र ईर्ष्याकारणम्?

मन्त्री—महाराज, क्षमस्व माम्। खनित्र-कुद्दालकहस्तेन मृत्तिकाप्रस्तरेण सह द्वन्द्वयुद्धं नास्माकं कार्यम्। राष्ट्रनीतिरेव अस्माकमस्त्रम्; मनुष्यमानसंस्तु अस्माकं व्यवहारः। शिवतलस्य शासनभारो युवराजोपरि समर्पणीय इति मन्त्रणा मयैव प्रदत्ता। तेनैव यद्बन्धनं सुरचितमभविष्यत्, न खलु तत् नगरयम्।

रणजित्—तेन किं फलं प्राप्तम्? वर्षद्वयं यावत् राजस्वं तैर्न प्रदत्तम्। ईदृशं दुर्भिक्षं तत्र सदैव संघटते। तेन तु न भवति राजस्वं कदाप्यलब्धम्।

मन्त्री—राजस्वादपि महार्घं किञ्चित् संलभमानमासीत्—एतस्मिन्नेव समये तस्य प्रत्यावतनं भवता समादिष्टम्। राजकार्ये क्षुद्रास्तु कदापि नावज्ञेयाः। जानीहि तावत्, यदा असहनीया अवस्था सञ्जायते, तदा दुःखस्यैव शक्त्या क्षुद्रास्तु अतिक्रम्य महान्तो भवन्ति महत्तराः।

रणजित्—मन्त्रणायास्ते सुरालापनं प्रतिक्षणमेव परिवर्तते। कति वारान् त्वया उक्तं—यत् ऊर्द्ध्वमारुह्य अधोदेशीयानां परिपीडनम् अनायासकरम्; अपि तु वैदेशिकानां प्रजानां तादृशं पीडनमेव राजनीतिः। किं त्वया नैतदुक्तम्?

मन्त्री—उक्तमेव मया। तदा तु अवस्था नैतादृशी आसीत्। कालानुकूलाऽभूत् मदीया मन्त्रणा। अधुना तु—

रणजित्—युवराजं शिवतले प्रेषयितुं नासीन्मे प्रक्षीणापि वासना।

मन्त्री—कथं महाराज?

रणजित्—ये खलु प्रजाजना विदूरवर्तिनस्तान् निकषा यदि पुनः

पुनर्गत्वा हार्दिकः सम्बन्धः स्थाप्यते, तदा तु तिरोहिता भवति तेषां भीतिः। प्रीतिप्रदर्शनेनैव प्राप्यते आत्मजनः, इतरो गृह्यते भीतिप्रदर्शनेन।

मन्त्री—प्रभो, युवराजस्य शिवतलप्रेषणे मौलिकं कारणं भवता विस्मृतम्। कति दिनानि यावत् तस्य मनस्तु व्याकुलं दृष्टम्। सञ्जातश्चास्माकं सन्देहो यत् राजप्रासादे नैव तस्य जन्म, मुक्तधारानाम्नी या खलु निर्झरिणी, तस्यास्तटदेशादेव अज्ञातकुलशीलोऽसौ समानीत इति केनापि सूत्रेण तेन परिज्ञातम्। अतस्तं विस्मारयितुं—

रणजित्—तत्तु जानामि। इदानीन्तु, स प्रायश एव रात्रौ निःसङ्ग एव निर्झरं निकषा गत्वा अशेत। वार्तां प्राप्य एकदाहं रात्रौ तत्र गतवान्, पृष्टवांश्च तं—वत्स अभिजित्, किं ते जातम्, कथमत्रैव अवस्थीयते? तेन प्रत्युक्तम्—अस्य जलस्य कलध्वनौ मदीयां मातृभाषामहं शृणोमीति।

मन्त्री—अहं तं पृष्टवान्—युवराज, किं ते जातम्? राजप्रासादे कथं प्रायशस्त्वं नाधुना दृश्यसे? तेनोक्तं—पृथिव्यां पथिरचनार्थमेव आगतोऽस्मीति वार्ता मया सम्प्राप्ता।

रणजित्—आयुष्मतस्तस्य राजचक्रवर्तिलक्षणं विद्यत इति विश्वासो मे तिरोभवति।

मन्त्री—येन खलु अस्य दैवलक्षणस्य वार्ता घोषिता, तत्रभवान् अभिरामस्वामी तु महाराजस्य गुरोरपि गुरुः।

रणजित्—तत्रभवता प्रमादः कृतः। तत्प्रसङ्गस्तु केवलं क्षतिं साधयति। शिवतलस्य पशुलोमानि यथा विदेशस्य हट्टेषु न वहिर्गच्छेयुः, एतदर्थमेव पितृपितामहानां शासनकालादारभ्य निरुद्धो नन्दिसंकटस्य पन्थाः। अभिजित् तमेव पन्थानम् उन्मोचयति। अनेन उत्तरकूटस्य अन्नवस्त्राणि भविष्यन्ति दुर्मूल्यानि।

मन्त्री—यतो वयसा नवीनः, युवराजः केवलं शिवतलादेव—

रणजित्—अपि तु, स्वजनानां विरुद्धे एवायं विद्रोहः। धनञ्जयनामधेयः शिवतलस्य यः खलु सन्न्यासी प्रजाजनान् समुत्तेजयति, तस्यैव पक्षे नूनं

सोऽपि वर्तते। इदानीं कण्ठमण्डितस्य तस्य कण्ठदेशः पेषणीयः। स खलु कारारुद्धः करणीयः।

मन्त्री—महाराजानुशासनस्य प्रतिवादे नास्ति मे साहसम्। इदन्तु ज्ञायते भवता यद् ईदृशा दुर्योगाः दृश्यन्ते, येषां रोधकरणात् मोचनमेव वरम्।

रणजित्—भवतु, तस्मिन् विषये मा चिन्तय।

मन्त्री—नाहं चिन्तयामि। किन्तु, महाराज एव चिन्तयतु एतदेव मे प्रार्थनम्।

[ प्रतिहारी प्रविशति ]

प्रतिहारी—अदूरे तिष्ठति मोहनगृहस्य राजपितृव्यो विश्वजित्।

[ प्रस्थानम् ]

रणजित्—अपरः सोऽसौ। अभिजितः कलुषणे स एव नायकः। आत्मीयरूपी अनात्मीयस्तु मनुष्यककुद् इव। पश्चात् संलग्नः स्थास्यति, छेत्तुमपि न शक्यते, वहनमपि क्लेशकरम्। कुतः शब्दोऽयम्?

मन्त्री - भैरवसाधकाः मन्दिरप्रदक्षिणार्थं वहिर्गताः।

( भैरवसाधकानां प्रवेशो गानञ्च )

तिमिर-हृद्विदारण
ज्वलदग्नि-निदारुण
मरुश्मशान-सञ्चर
शंकर हे शंकर!
वज्रघोषा तव वाणी
हे रुद्र शूलपाणे
मृत्यु-सिन्धु-सन्तर
शंकर हे शंकर।

( प्रस्थानम् )

[ प्रविशति रणजितः खुल्लतातो मोहनगृहाधिपतिर्विश्वजित्। शुभ्रकेशः शुभ्रवेशः शुभ्रोष्णीषः ]

रणजित्—नमस्ते। तात, उत्तरभैरवमन्दिरे पूजानुष्ठाने योगदानार्थं त्वमद्य आगमिष्यसीति नासीन्मे प्रत्याशितम् (?) एतादृशं सौभाग्यम्।

विश्वजित्—अद्य उत्तरभैरवः पूजां न ग्रहीष्यतीति ज्ञापयितुम् आगतोऽस्मि।

रणजित्—तव दुर्वाक्यमिदमद्यास्माकं महोत्सवम्—

विश्वजित्—किमर्थं महोत्सवः! निखिलस्य विश्वेषां तृषितानां कृते देवदेवेन कमण्डलुमध्यात् या खलु जलधारा सर्वतः प्रवाहिता, सा मुक्तधारा कथं युष्माभिर्निरुद्धा?

रणजित्—अरातिदमनार्थम्।

विश्वजित्—महादेवं प्रति वैराचरणे नास्ति ते भीतिः?

रणजित्—यः खलु देव उत्तरकूटस्य पुराधिपतिः, अस्माकं विजयेन तस्यैव विजयः। एतदर्थमेव अस्मदीयपक्षम् अवलम्ब्य स देव आत्मनो दानं प्रत्याहृतवान्। तृष्णायाः शूलेन शिवतलं विद्ध्वा उत्तरकूटस्य सिंहासनमूले स निक्षेप्स्यति।

विश्वजित्—तर्हि, युष्माकं पूजनं न तु यथार्थतः अर्चनं, तत्तु वेतनमेव।

रणजित्—तात, परेषां पक्षपाती, आत्मीयविरोधी त्वम्। तवैव शिक्षया अभिजित् स्वराज्यं स्वकीयरूपेण ग्रहीतुं न शक्नोति।

विश्वजित्—ममैव शिक्षया? नन्वेकदाहं तवैव पक्षे नासम्? प्रजानां सर्वनाशं संसाध्य यदा तु चण्डपत्तने त्वं विद्रोहं सृष्टवान्, स खलु विद्रोहो न खलु मया दान्तः? अवसाने तु कदा नु बालकोसौ अभिजित् हृदयं मे प्राविशत्—आलोक इव प्रादुर्भूतः। तमसायां दर्शनसामर्थ्याभावात् यान् अहमाहतवान्, पश्चात् तान् स्वजनरूपेण अनुभूतवान्। राजचक्रवर्ति-लक्षणं दृष्ट्वा यं त्वं परिगृहीतवान्, उत्तरकूटस्य सिंहासने एव तं निरोद्धुं कामयसे?

रणजित्—मुक्तधारा-निर्झर-तटे अज्ञातकुलशीलः परित्यक्तश्च अभिजित् समाहृतः—इत्येषा वार्ता तत्सकाशे त्वयैव ननु प्रकाशिता ?

विश्वजित्—वाढं, मयैव प्रचारितः सन्देशः। तस्मिन् दिवसे दीपालिकोत्सवमुपलक्ष्यासौ आसीदस्माकं प्रासादे आमन्त्रितः। गोधूलि-वेलायां गौरीशिखरं प्रति निबद्धदृष्टिरसौ एकाकी अलिन्दे दण्डायमानो मया अवलोकितः पृष्टश्च—"किं पश्यसि, वत्स ?" तेनोक्तं—"ये खलु पन्थानो नाद्यापि रचितास्तेऽपि भाविकालीनाः पन्थानो दुर्गमशैलोपरि सम्भाव्यमाना दृश्यन्ते—दूरं समीपमानेतुं पन्थाः। श्रुत्वा तदैव मे मनसि अजायत—मुक्तधाराया उत्सतटे कापि गृहहीना जननी तम् असूयत ; कस्तं निरोत्स्यति ? नातःपरं धैर्यधारणे शक्तोहम् ; उक्तं मया—वत्स, तव जन्मलग्ने गिरिराजेन पथि एव विरचिता तव अभ्यर्थना, गृहं प्रति नामन्त्रितस्त्वं गृहशङ्खेन।"

रणजित्—अधुना मया सर्वमवगम्यते।

विश्वजित्—किमवगतं त्वया ?

रणजित्—वार्तामिमामाकर्ण्य उत्तरकूटस्य राजगृहात् विच्छिन्नं जातम् अभिजितो ममत्वम्। तदेव स्पर्धया दर्शयितुं स नन्दिसंकटस्य मार्गम् उन्मोचितवान्।

विश्वजित्—तेन का क्षतिः ? यः खलु पन्था उन्मोचितः—स तु सर्वेषामेव—उत्तरकूटस्य शिवतलदेशस्य च।

रणजित्—तात, पितृव्यस्त्वमात्मीयो, गुरुजनश्च ; एतदर्थमेतावत्कालं यावत् रक्षितं धैर्यम्। नातःपरं क्षमोऽस्मि। स्वजनविद्रोही त्वम्, तद् राज्यमिदं परिहाय दूरं गच्छ।

विश्वजित्—नाहं परित्यक्तुं शक्तः। यदि, यूयं मां परित्यजथ, तदाहं तु सहिष्ये। (प्रस्थानम्)

[ अम्बायाः प्रवेशः ]

अम्बा—( राजानं प्रति ) भोः भोः, के यूयम् ? सूर्यस्तु अस्तं गच्छति, किन्तु सुमनो मे नाधुनापि प्रत्यागतः।

रणजित्—अयि, का त्वम् ?

अम्बा—नास्ति मे परिचयः। आसीत् यो मे जीवितसर्वस्वम् सौऽसौ अनेन पथा दूरं नीतः। अस्य पथः किं शेषो नास्ति। ननु, किम् इदानीमपि सुमनः प्रचलति, केवलमेव प्रचलति—यत्र गौरीशिखरमुल्लंघ्य पश्चिमायामस्तं गच्छति दिवाकरः, निलीयते आलोकच्छटा—निमज्जति सर्वमेव ?

रणजित्—मन्त्रिन्. इयं किम्—

मन्त्री—बाढं, महाराज, तद्बन्धनस्य निर्माणार्थम्—

रणजित्—( अम्बामुद्दिश्य ) भद्रे, शोकं मा कुरु। अहं जानाम्येतत्-यत्—पृथिव्यां सर्वेषु चरम यद्दानं, पुत्रेण ते तदेव संलब्धम्।

अम्बा—यदि तदेव सत्यम् अभविष्यत्, तदा तद्दानमानीय स सायंकाले मह्यम् अदास्यत्। ननु तस्याहं जननी।

रणजित्—स हि आनीय दास्यति। असौ सायंकालो नाधुनाऽपि समायातः।

अम्बा—वत्स, सत्यं भवतु ते वचनम्। अहं तदर्थं भैरवमन्दिरस्य पथि पथि प्रतीक्षां करिष्यामि। सुमन ! सुमन !

[ प्रस्थानम् ]

[ छात्रसंघेन सह उत्तरकूटस्य प्राथमिकविद्यालयशिक्षक आरात् वृक्षतले प्रविशति। ]

शिक्षकः—वेत्र-वेत्रप्रहारं प्राप्स्यथ। समुच्चकण्ठेन उच्यन्तां—विजयतां राजराजेश्वरः।

छात्राः—विजयतां राजरा—

शिक्षकः—( समीपवर्तिनां छात्राणां कतिपयेषु मृदु कराघातं कृत्वा ) जेश्वर।

शिक्षकः—श्रीश्रीश्रीश्रीश्री—

छात्राः—श्रीश्रीश्री—

शिक्षकः—( आहत्य ) पञ्चवारान्।

छात्राः— पञ्चवारान् ।

शिक्षकः—लक्ष्मीभ्रष्टाः, वानराः ! उच्यन्तां सर्वे (?)—श्रीश्रीश्रीश्रीश्री—

छात्राः—श्रीश्रीश्रीश्रीश्री—

शिक्षकः—उत्तरकूटाधिपतिर्विजयताम् ।

छात्राः—उत्तरकूटा—

शिक्षकः—धिपतिर्

शिक्षकः—विजयताम्

छात्राः—विजयताम्

रणजित्—युष्माभिः कुत्र गम्यते ?

शिक्षकः—अस्माकं यन्त्रराजो विभूतिर्महाराजेनाद्य पुरस्कृतो भविष्यति । अत आनन्दोत्सवार्थं बालकैः सह तत्र गच्छामि । सञ्जाते उत्तरकूटस्य गौरवे शैशवादेव येनैते बालका गौरवमनुभवितुं शिक्षन्ते, एतदर्थमेव न किञ्चिदपि उपलक्ष्यं परिहातुं कामये ।

रणजित्—विभूतिना किं कृतमिति ननु सर्वैरेव एभिः ज्ञायते ?

बालकाः—( उल्लम्फ्य करतालीं दत्वा ) ज्ञायते ; निरुद्धं तेन शिवतलस्य पानीयजलम् ।

रणजित्—कथं निरुद्धम् ?

बालकाः—( सोत्साहम् ) तान् विपन्नान् कर्तुम् ।

रणजित्—कारणं किम् ?

बालकाः—ते तु दुर्जनाः !

रणजित्—कथं दुर्जनाः ?

बालकाः—ते नूनं दुर्जनाः, अतीव दुर्जनाः—सर्वैरेव एतत् ज्ञायते ।

रणजित्—कथं दुर्जनाः—तत्तु किं न जानीथ ?

शिक्षकः—महाराज, जानात्येव । रे रे, किं युष्माभिर्न पठितम् ? पुस्तके किं न दृष्टम् ? यत् तेषां धर्मस्त्वतीव निन्दितः ।

बालकाः—सत्यम्, सत्यम् ; भृशं निन्दितस्तेषां धर्मः ।

शिक्षकः—किं च, ते तु अस्मादृशाः—भोः भोः उच्यतां सर्वम् ( नासिकां प्रदर्श्य ) ।

बालकाः—न हि उन्नतनासिकास्ते ।

शिक्षकः—भवतु, अस्माकं गणनाचार्येण किं प्रमाणीकृतम् ? नासिकायाम् उन्नतायां किं भवन्ति ?

बालकाः—जात्या अतीव उन्नीतो भवति ।

शिक्षकः—ते तु किं कुर्वन्ति ? कथ्यताम्— पृथिव्याम्—उच्यताम्—किं न ते सर्वेषां विजयिनो भवन्ति ?

बालकाः—सत्यम्, सत्यम् ; विजयिनो भवन्ति ।

शिक्षकः—उत्तरकूटस्य अधिवासिनः कदापि युद्धे पराजिताः ? किं जानीथ ?

बालकाः—कदापि न ।

शिक्षकः—अस्माकं महाराजस्य पितामहः प्रागजित् त्रिनवत्यधिकद्विशत-संख्यकैः सैनिकैः सार्द्धसप्तशताधिक त्रिंशत्सहस्रसंख्यकान् दक्षिणागतान् वर्बरान् न किं विताडयामास ?

बालकाः—सत्यमसौ विताडितवान् ।

शिक्षकः—नूनमेव जानीहि महाराज ; उत्तरकूटात् बहिर्देशे ये खलु भाग्याहताः मातृगर्भे जन्म स्वीकुर्वन्ति, एकदा एते एव बालकास्तेषां विभीषिका-रूपिणो भविष्यन्ति । यद्येतन्न भवेत्, तदाहं मिथ्यैव शिक्षकः । कीदृशः सुमहान् कर्तव्यभारो मयि एव न्यस्तः—नैतत्तु मनागपि मया विस्मर्यते वयमेव मानुषान् निर्माय दद्मः । भवत अमात्यास्तु तान् एव संगृह्य व्यवहरन्ति । अपि तु, किंवा ते प्राप्नुवन्ति, वयमपि वा किं प्राप्नुम इति तुलनां विधाय विचार्यताम् ।

मन्त्री—अमी छात्रास्तु युस्माकं पुरस्कारः ।

शिक्षकः—अतीव शोभनमुक्तं भवता । मन्त्रिमहोदय—छात्रास्तु अस्माकं

पुरस्कारः। अहो, खाद्यजातमतीव दुर्मूल्यम्—पश्यतु तावत्—गव्यघृतम्—एकदा यस्य मूल्यमासीत्—

मन्त्री—भवतु भवतु, तव गव्यघृतस्य विषयमहं चिन्तयिष्यामि। गम्यतामिदानीम्। समायातः पूजनसमयः।

[ जयध्वनिं कारयित्वा छात्रैः सह शिक्षकस्य प्रस्थानम् ]

रणजित्—तव गुरोरस्य करोटिकायां नास्ति अन्यत् किमपि घृतम्, गव्यघृतमेव वर्तते।

मन्त्री—पञ्चगव्यानामेकं किञ्चिदस्त्येव। अपि तु, महाराज, कार्यसाधने प्रयोजनम् ईदृशैरेव मनुष्यैः। यादृशमेव समादिष्टं तादृशमेव स दिनेभ्यः परं दिनानि समाचरति। बुद्धिप्रकर्षे तु कार्यं यन्त्रवत् न कदापि प्रचलति।

रणजित्—मन्त्रिन्, आकाशे किं तत् दृश्यते ?

मन्त्री—महाराज, असौ खलु विभूतिनिर्मिता यन्त्रचूडा—कथमेतत् विस्मर्यते ?

रणजित्—कदापि चैषा ईदृशं स्पष्टं न दृश्यते।

मन्त्री—अद्य प्रातर्झटिकया निर्मलीभूतं गगनम्। अतः खलु दृश्यतेचैवम्।

रणजित्—किं पश्यसि, तस्याः पश्चाद्देशादुदेति सूर्यः रोषदीप्त इव। अपरञ्च, दानवस्य उद्यतमुष्टिरिव सा दृश्यते। अस्यास्तादृशं समुन्नयनं न हि सुष्ठु जातम्।

मन्त्री—अस्माकमाकाशस्य वक्षसि शूलमेव विद्धम्—इत्येवं मन्यते।

रणजित्—इदानीं सम्प्राप्तो मन्दिरगमनकालः।

( उभयोः प्रस्थानम् )

[ उत्तरकूटस्य द्वितीयनागरिकसंघस्य प्रवेशः ]

प्रथमः—किं दृष्टम् ? अधुना विभूतिः अस्मान् परिहाय प्रचलति। स तु अस्माकं समाजे एव परिणतिं सम्प्राप्त इत्येतद् इतिवृत्तं चर्मणो घर्षित्वा स विलोपयितुं चेष्टते। एकदा स अनुभविष्यति—यदि दीर्घतरो भवति कोषादसिस्तदा नावहति कल्याणमिति।

द्वितीयः - एतत्तु, भ्रातः, समर्थनीयं, यद् विभूतिना उत्तरकूटः प्रख्यातिम् आपादितः।

प्रथमः—छिद्यतामेषा कथा। तमुपलक्ष्य युष्माभिराधिक्यमेव प्रदर्श्यते। यद्बन्धननिर्माणे क्लेशात्तस्य जिह्वा बहिर्गता तद्बन्धनं नूनमेव दशवारान् भग्नतां प्राप्तम्।

तृतीयः—पुनरपि यद्बन्धनभङ्गो न भविष्यतीति को वा जानाति ?

प्रथमः—बन्धनादुत्तरस्यां दिशि यः स्तूपो, ननु किमसौ त्वया दृष्टः ?

द्वितीयः—कथं कथम् ; किं जातम् ?

प्रथमः—किं जातम् ? नैतज्जानासि ? येन दृश्यते, तेनैवोच्यते—

द्वितीयः—किमुच्यते भ्रातः ?

प्रथमः—किमुच्यते ? किं मूढस्त्वम् ? किम् एतदपि प्रष्टव्यम् ? समग्रमेव—तत्तु किं वक्ष्यामि—

द्वितीयः—तथापि, वर्णय तावद् व्यापारम्।

प्रथमः—रञ्जन, त्वया विस्मापितोऽस्मि। क्षणमपेक्षस्व, स्पष्टमेव अवगमिष्यसि—अकस्मात् यदा सम्पूर्णमेव—

द्वितीयः—सर्वनाशः ! किमुच्यते, भ्रातः ! अकस्मात् सम्पूर्णमेव ?

प्रथमः—बाढं, भ्रातः, झगुरुसकाशात् ज्ञास्यसि तावत्। स स्वयमेव परिमाप्य प्रत्यक्षीकृत्य प्रत्यागतः।

द्वितीयः—अस्त्येव झगुरोस्तादृशो गुणः। तस्य मस्तिष्कं तु सुस्थिरम्। सर्वे यदा प्रोत्साहयन्ति, तदा स कुतोऽपि मानदण्डकां बहिरानयति।

तृतीयः—भवतु भ्रातः, केचन वदन्ति यद् विभूते र्यत् खलु विद्याजातं, तत्सर्वम्—

प्रथमः—जानाम्यहम्, वेङ्कटवर्मसकाशाद् अपहृतम्। सत्यम्, आसीत् स यथार्थतो गुणी। कीदृशी कल्पनातीता मनीषा ! तथापि पुरस्कारं प्राप्नोति विभूतिः, अपरतः स वराकः खाद्याभावात् पञ्चत्वं गतः।

तृतीयः—केवलं किम् आहार्याभावादेव ?

प्रथमः—अरे, आहार्याभावात्, उत वा कस्यापि हस्तदत्तं किञ्चित् भुक्त्वा—

तेन सन्देशेन किं प्रयोजनम् ? पुनश्च कः काभ्यो दिग्भ्यः—निन्दाकारिणां तु अभावो नास्ति। अस्य देशस्य मनुष्याणां कोऽपि कस्यापि कुशलं न सहते।

द्वितीयः—युष्माभिर्यदेवोच्यते, तथाप्यसौ तु—

प्रथमः—अहो कथं तन्न भविष्यति ? विचार्यतां तावत् कस्यां भूमौ तस्य जन्म। तस्मिन् चवुयाग्रामे मम प्रपितामहस्य आवास आसीत्, तस्य नाम युस्माभिः किमाकर्णितम् ?

द्वितीयः—अहो, तस्य नाम उत्तरकूटस्य को न जानाति ? स तु असौ—तत् किमुच्यते—

प्रथमः—यथार्थं यथार्थं भास्कर इति। नस्यनिर्माणे एतादृशो निपुणः शिल्पी अस्मिन् देशे न कदापि जातः। तस्य हस्तनिर्मितं नस्यं विना राज्ञा शत्रुजिता नातिवाहित एकोऽपि दिवसः।

तृतीयः—पश्चादालोचनं भविष्यति ; अधुना मन्दिराभिमुखं प्रचलितव्यम्। वयन्तु विभूतेः स्वग्रामवासिनः। अस्माभिरानीतानि माल्यानि प्रागेव तेन ग्रहीतव्यानि। वयन्तु तस्य दक्षिणत एव आसनं ग्रहीष्यामः।

( नेपथ्ये—मा गच्छ, भ्रातर्मा गच्छ, प्रतिनिवर्तस्व तावत्। )

प्रथमः—श्रूयतां, वृद्धो वटुकस्तु वहिर्गतः।

( वटुकस्य प्रवेशः )

[ गात्रे छिन्नं कम्बलं, हस्ते वङ्किमवृक्षशाखानिर्मिता यष्टिः, केशास्तु अविन्यस्ताः ]

प्रथमः—भोः वटो, कुत्र गम्यते ?

वटुः—सावधानो भव, वत्स, सावधानो भव। तेन पथा मा गच्छ ; यथाकालं प्रत्यावर्तनं कुरु।

द्वितीयः—कथम्, उच्यताम्।

वटुः—बलि दास्यति, नरबलिम् ! तरुणं मे पौत्रद्वयं बलपूर्वकं नीतवान्। न कदापि तौ प्रत्यावृत्तौ।

तृतीयः—खुल्लतात, कमुद्दिश्य बलिं दास्यति ?

वटुः—तृष्णां, तृष्णादानवीमुद्दिश्य वलिं प्रदास्यति।

द्वितीयः—तृष्णा? का सा?

वटुः—सा यावत् खादति, तावदाकांक्षते। घृतभुग्वह्निशिखेव केवलमेव दीर्घायते तस्याः विशुष्का रसना।

प्रथमः—उन्मत्तोऽसि! वयन्तु गच्छाम उत्तरभैरवमन्दिरम्। तत्र कुतास्ते तृष्णादानवी?

वटुः—किं युष्माभि र्नाधुनापि वार्ता सम्प्राप्ता? अद्य तावत् मन्दिरात् भैरवं विताडयितुं ते प्रचलन्ति। वेदिकायामभिषिक्ता भविष्यति तृष्णा।

द्वितीयः—मा, मा, एतादृशं वाक्यं मा उच्चर। श्रुतिपथं गते ईदृशे वाक्ये उत्तरकूटस्य मनुष्यास्त्वां निहत्य खण्डीकरिष्यन्ति।

वटुः—ते तु मे गात्रमुद्दिश्य निक्षिपन्ति धूलिजालम्, किशोरास्तावत् क्षिपन्ति लोष्टम्। सर्वे वदन्ति—यत् पौत्रद्वयेन ते प्राणाः प्रदत्तास्तत्तु तयोः सौभाग्यमेव।

प्रथमः—ते तु मृषा न वदन्ति।

वटुः—मृषा न वदन्ति? प्राणानां विनिमयेन न प्राप्यन्ते यदि प्राणाः, मृत्युना यदि मृत्युरेव अभ्यर्थ्यते, तदा एतादृशीं क्षतिं कथं भैरवः सहेत? सावधानो भव। वत्स, सावधानो भव। तेन पथा न गन्तव्यम्।

( प्रस्थानम् )

द्वितीयः—अग्रज, पश्यतु तावत्, मम गात्रे भीतिकण्टकं समुत्पद्यते।

प्रथमः—रज्जो, त्वमतीव भीरुः; तत्, चल, चल।

( सर्वेषां प्रस्थानम् )

[ युवराजस्याभिजितो राजकुमारस्य च सञ्जयस्य प्रवेशः ]

सञ्जयः—राजप्रासादं परित्यज्य कथं त्वया अन्यत्र गम्यते इति नाऽहमवगच्छामि।

अभिजित्—न शक्ष्यसि त्वं, सर्वमवगन्तुम्। मम जीवनस्रोतो राजगृहस्य पाषाणराशिमतिक्रम्य प्रवक्ष्यतीति वार्तां कर्णेकृत्य वसुन्धरामागतोऽहम्।

सञ्जयः—कियद्दिनानि यावत्त्वामुदासीनं पश्यामि। अस्माभिः सार्द्धं ते प्रेमबन्धनं मनसि शिथिलीभूतम्। किं नु तदद्य विच्छिन्नं भवति?

अभिजित्—अवलोकय तावत् सञ्जय, गौरीशिखरमुद्भासयन्तम् अस्ताय-मान-तपनच्छविम्। मन्ये, कोऽसौ वह्निविहगो मेघपक्षं प्रसार्य निशिथिनी-मभिलक्ष्य प्रचलति। मम पथयात्राच्छविरियमाकाशपटे अस्तसूर्येणाङ्कितम्।

सञ्जयः—राजपुत्र, न दृश्यते किम्, असौ यन्त्रचूडा सूर्यास्तमेघानां वक्षो विदीर्य दण्डायते इति? मन्यते यथैव उड्डीयमानो विहगो वक्षसि बाणविद्धो लम्बमानपक्षच्छदो यामिन्या गह्वरतटमभिपतति। नैतन्मे प्रीतिमावहति। अधुना समागतो विश्रामकालः। कुमार, प्रतिनिवर्त्यतां राजप्रासादः।

अभिजित्—यत्रास्ति प्रातिकूल्यं किमस्ति तत्र विश्रामः?

सञ्जय—प्रासादेषु ते प्रातिकूल्यमिति अधुना गतेष्वेतेषु दिनेषु कथं त्वयावगम्यते?

अभिजित्—मुक्तधारायास्तैर्बन्धनं रचितमिति यदाश्रौषम्, तदैवैतद-वगतम्।

सञ्जयः—नाहमवगच्छामि ते वाचो मर्मार्थम्।

अभिजित्—मर्त्यानामन्तर्गतं रहस्यं विधात्रा वह्निविश्वं कुत्रापि लिखित-मास्ते। मम मर्मवाणी च विराजते मुक्तधाराया अन्तःस्तले। तस्या एव चरणयुगं यदा एभिः शृङ्खलितम् तदैव मे अपगत इव मनसः प्रसादः ज्ञातञ्च यद् उत्तरकूटानां सिंहासनमेव मे जीवनस्रोतसो बन्धनम् इति। निर्गतोऽहं तत् पथिषु तस्यैव द्वारोन्मोचनाय।

सञ्जयः—कुमार, मामपि तव सहचरत्वेन गृहाण।

अभिजित्—न हि भ्रातः। आत्मपथस्तयैवात्मना अनुसन्धातव्यः। मामनुगच्छसि चेदहमेव तव पन्थानमावरयिष्यामि।

सञ्जयः—अकरुणो मा भव। एतद्धि मां व्यथयति।

अभिजित्—अवगतोऽसि मे हृदयम्। तेन आहतोऽपि त्वं माम् अवगमिष्यसि।

सञ्जयः—कुतस्त्वमामन्त्रितः, कुत्र च चलसीत्यवलम्ब्य नाऽहं किञ्चिदपि प्रष्टुमिच्छामि। परन्तु, युवराज, आसन्नायामस्यां सन्ध्यायां राजभवने वैतालिकाः यद्दिनावसानगोतिमारभन्ते—नास्ति किमस्यापि किमप्याह्वानम्? अस्तु वा काठिन्यस्यगौरवम्, किन्तु यद् मधुरं तस्याप्यस्ति मूल्यम्।

अभिजित्—भ्रातस्तस्यैव परिशोधार्थं काठिन्यस्येयं साधना।

सञ्जयः—अपि स्मर्यते किं यत् प्रत्यूषे पूजनार्थमासने समुपविष्टः पुरतः श्वेतकमलं विलोक्य विस्मयं गतोऽसि? तव जागरणात् प्रागेव कदा प्रत्यूषे केनैतद् रहसि विचित्य समुपहृतम्, तेन हि आत्मा गोपायितः। किन्त्वेतत् किमिव सुधासिक्तम् तस्य स्मरणार्थं नास्ति किमद्य प्रयोजनम्? आत्मगोपनं कुर्वताऽपि आत्मपूजनं गोपायितुं येन न शक्तं, तस्य मुखकमलं किं त्वया न स्मर्यते?

अभिजित्—ननु स्मर्यते मया। तेनैव वसुन्धरायाः संगीतं प्रतिरोध्य नभसि लौहदंष्ट्राविकाशपूर्वकमट्टहास्यं कुर्वाणं वीभत्समदः सोढुं न क्षमोऽस्मि। स्वर्गं मे प्रीतिरसायनमिति कारणेन दानवैः सह योद्धुं नास्ति मे कुण्ठा।

सञ्जयः—मूर्च्छति हि चैतन्नीलगिरिशिखरे गोधूलिकिरणजालः। एतन्मध्यत एको विलापच्छविस्ते हृदयं किं न प्रविशति?

अभिजित्— अथ किम्? प्रविशत्यसौ मे मर्मदेशम्। ममापि वक्षस्तलं पूर्यते विलापेन। नास्ति मे दृढताया अभिमानम्। पश्य पश्य, असौ विहङ्गमो देवदारुशाखायां निःसङ्गः समासीनस्तिष्ठति। न ज्ञायते किं चासौ कुलायं प्रतिगमिष्यति, उतो वा तमसां विदार्य्य प्रस्थास्यते अरण्यप्रवासमिति। किन्तु यदसौ सूर्यास्तनभस्तटं निरीक्षमाणो मौनं तिष्ठति तन्निरीक्षमाणो मे मर्मणि ध्वनति। मनोहारिणी चेयं धरणी। यैर्यैरेव जीवनं मे मधुरीकृतम्, तत्-समुच्चयमेवाहं नमस्करोमि।

[ प्रविशति वटुः ]

वटुः—वारितोऽहं गमनात्। किञ्च प्रहृतोऽहं विताडितः।

अभिजित्—किमिदं भोः? कथं ते ललाटं विदीर्य निपतति रक्तधारा?

वटुः—सर्वेषां सतर्कीकरणार्थमेव मया बहिर्गतम्। उक्तञ्च मया—अमुना मार्गेण मा गच्छ। प्रतिनिवृत्त्यतामिति।

अभिजित्—कथम् किं सञ्जातम्?

वटुः—न जानासि, राजपुत्र? यत्ते हि इदानीं यन्त्रवेदिकोपरि तृष्णा-राक्षसीं स्थापयिष्यन्ति; ते च कामयन्ते नरवलिम्।

सञ्जयः—सत्यमिदम्?

वटुः—तद्वेदिकानिर्माणकाले पौत्रद्वयस्य मे रक्तधारा प्रवाहिता। स्वत एव विनाशं गमिष्यति पापवेदिकेयमिति मनसि प्रकल्पितम्। किन्तु, नाद्यापि सा भग्नीभूता, नापि जागरितश्च भैरवः।

अभिजित्—भग्नीभविष्यत्येव। समागतस्तत्कालः।

वटुः—(अन्तिकमुपागम्य अनुच्चस्वरेण)—तर्हि श्रुतमेतत् किम्? किमाकर्णितं भैरवस्याह्वानम्?

अभिजित्—श्रुतमेव।

वटुः—हा कष्टम्! तर्हि नास्ति ते निस्तारः?

अभिजित्—अथ किम्? नास्त्येव।

वटुः—किं न पश्यसि—शिरसो मे स्रवति शोणितधारा, सर्वाङ्गेषु च धूलि-जालः। यदा नु वक्षो विदीर्णं भवेत्, तदा किञ्चैतत्, कुमार, सहनमेष्यति?

अभिजित्—सहिष्ये खलु भैरवस्य प्रसादेन।

वटुः—सर्वतो यदा सर्वे वैरमाचरिष्यन्ति? स्वजनाश्च यदा धिक्कारमुदीरयिष्यन्ति?

अभिजित्—नूनमेव सोढव्यम्।

वटुः—तर्हि, नास्ति भयकारणम्?

अभिजित्—अथ किम्! नास्ति भयम्।

वटुः—साधु साधु। तत् मा विस्मर वृद्धम्। स्मर्यतामेषः। मयापि अवलम्ब्यते स पन्थाः। भैरवेणाङ्कितं मे ललाटतटे यद् रक्ततिलकं, तेनैव हेतुना अन्धकारेऽपि मामभिज्ञास्यसि।

[ वटुः प्रस्थानं करोति । राजप्रहरी उद्धवः प्रविशति ]

उद्धवः—नन्दि-संकटस्य द्वारं कथमुन्मोचितम्, युवराज ?

अभिजित्—शिवतलवासिनां जनानां नित्यदुर्भिक्षाद् रक्षणाय ।

उद्धवः—महाराजस्तु तेषां सहायताविधानार्थं समुद्यतः । स हि दयालुर्ममतामयः ।

अभिजित्—दक्षिणकरस्य कार्पण्येन पथरोधं विधाय वामकरस्य वदान्यतया कस्यापि रक्षणं न हि सम्भवति । तेनैव उन्मोचितो मया तेषामन्नचलाचलस्य पन्थाः । कारुण्योपरि निर्भरतायाः दैन्यं न मे रोचते ।

उद्धवः—महाराजः कथयति—नन्दिसंकटस्य प्रतिरोधं विनाश्य त्वया उत्तरकूटस्य भोजनपात्रतलमपसारितम् ।

अभिजित्—शिवतलाधिवासिनामन्नजीवित्वरूपाच्चिरन्तनदुर्भाग्यादुत्तरकूटीया मुक्तिं प्रापिताः ।

उद्धवः—कृतमेतद् दुःसाहसिकम् । महाराजस्तु विदितवृत्तान्तः । नातःपरं वक्तुं शक्नोमि । सम्भवति चेदधुनैव प्रस्थानं कुरु । अध्वनि दण्डायमानस्य त्वया सह आलपनमपि न हि निरापदम् ।

[ उद्धवः प्रस्थानं करोति ]

( प्रविशति अम्बा )

अम्बा—सुमन, वत्स सुमन ! भो भो ! येन पथा स नीतस्तेनैव पथा किं युष्माभिर्न गतम् ?

अभिजित्—किं बलान्नीतस्ते पुत्रः ?

अम्बा—अथ किम् ? अमुत्र पश्चिमदिगन्ते यत्र हि तपनोऽस्ताचलमेति, यत्रैव च भवति दिवसस्यावसानम् ।

अभिजित्—अनेनैव पथा मयापि गन्तव्यम् ।

अम्बा—तदाहि पालय दुःखिन्या एकमनुरोधम्—यदैव तं द्रक्ष्यसि, कथय जननी ते पन्थानं निरीक्षमाणा प्रतीक्षते इति ।

अभिजित्—नूनमेव ज्ञापयिष्यामि ।

अम्बा—वत्स, चिरजीवी भव। सुमन—मम प्राणाधिक सुमन।

( प्रस्थानं कुरुते )

[ भैरवपन्थिनः प्रविश्य गायन्ति ]

जय भैरव! जय शंकर!

जय जय जय प्रलयंकर!

जय संशयभेदन, जय संशयच्छेदन

जय संकटसंहर, शंकर शंकर!

( प्रस्थानम् )

[ सेनापतिर्विजयपालः प्रविशति ]

विजयपालः—युवराज, राजकुमार, सविनयमहमभिवादये। महाराज-सकाशादागतोऽस्मि।

अभिजित्—को हि तत्रभवत आदेशः?

विजयपालः—रहसि कथयिष्यामि सर्वम्।

सञ्जयः—( अभिजितः करं सुदृढं धृत्वा )—कथं रहसि वक्तव्यम्? किं मत्तोऽपि गोपनीयम्?

विजयपालः—एवमेव आदेशः। राजशिविरे वारमेकं पदार्पणं करोतु, राजकुमारः।

सञ्जयः—अहमपि सहचरो भविष्यामि।

विजयपालः—तत्तु नाभिमतं श्रीमतो महाराजस्य।

सञ्जयः—तर्हि अस्मिन्नेव पथि अहं प्रतीक्षिष्ये।

[ सहाभिजिद् विजयपालः शिविरं प्रति चलति ]

[ प्रविशति कश्चिदुदासी ]

गानम्

नासौ प्रत्यागमिष्यति, न भवेत्तदागमनम्।

झटिकामभि मोचिता तरणी न पुनरेष्यति कूलम्।

मत्तेन केनासौ चाहूय नीतः
अनुसंत्यक्तकेवलरुदितः
न हि तमाश्लेक्ष्यति तव बाहुबन्धनम् ॥

( प्रस्थानम् )

[ प्रविशति काचित् पुष्पविक्रयकारिणी ]

पुष्पविक्रेत्री—भद्र, को हि उत्तरकूटनिवासी विभूतिनामधेयो जनः ?

सञ्जयः - कथम् ? तेन किं ते प्रयोजनम् ?

पुष्पविक्रेत्री—वैदेशिकाऽहम्, देवतलिग्रामादागच्छामि । उत्तरकूटवासिनः सर्वे तस्यागमननिर्गमणमार्गेषु कुसुमानि वर्षन्तीति मया श्रुतम् । अपि साधु-महात्मासौ जनः ? तत्रभवतो दर्शनलाभार्थमेव प्रचितानि मया स्वकीयमालश्चस्य कुसुमानि ।

सञ्जयः—नास्तु वा साधुमहात्मा । बुद्धिमान् खल्वसौ ।

पुष्पविक्रेत्री—किं तेन सम्पादितम् ?

सञ्जयः—अस्माकं निर्झरिणी तेन निरुद्धा ।

पुष्पविक्रेत्री—तेनैव पूजनसमारोहः ? निर्झरबन्धनेन किं सिध्यति दैवकृत्यम् ?

सञ्जयः—न हि न हि । पतिष्यति निगडबन्धनं दैवतकरेषु ।

पुष्पविक्रेत्री—तेनैव पुष्पवर्षणम् ? न हि बुध्यते मया ।

सञ्जयः—श्रेयान् हि अनवबोधः । अनुचितः खलु दैवतकुसुमानामपचयः । प्रतिगम्यताम् तावत् ।—यातु, शृणु शृणु, किं विक्रेष्यसि मह्यं तवैतत् श्वेतपद्मम् ?

पुष्पविक्रेत्री—साधुजनाय यत् प्रकल्पितम्, न हि तत्कुसुमं विक्रेतुमलम् ।

सञ्जयः—यो हि महाजनो मे सर्वाधिकभक्तिभाजनं, तस्मै एव निवेदयिष्यामि ।

पुष्पविक्रेत्री—तर्हि गृह्यतामेतत् । न हि मूल्यं ग्रहीष्यामि । निवेद्यतां

तत्रभवते मे प्रणामाञ्जलिः । विज्ञाप्यतां चैतत्, यदहं देवतलवासिनी दुःखिनी पुष्पविक्रयकारिणीति ।

( प्रस्थानम् )

[ प्रविशति विजयपालः ]

सञ्जयः—कुत्र मे अग्रजः ?

विजयपालः—शिविरे कारारुद्धस्तिष्ठति ।

सञ्जयः—युवराजः कारारुद्धः ? अहो, अमार्जनीयेयं स्पर्द्धा ।

विजयपालः—दृश्यतामेतन्महाराजस्यानुशासनम् ।

सञ्जयः—कस्यायं षडयन्त्रः ? तत्सकाशमुपगन्तुं सकृदनुमतिर्मे प्रदीयताम् ।

विजयपालः—मर्षय माम् ।

सञ्जयः—विद्रोही खल्वहम् । मामपि कारायां निक्षिप ।

विजयपालः—न हि तत्रादेशः ।

सञ्जयः—भवतु, अधुनैव आदेशग्रहणार्थं गच्छामि ।

( कतिचित् पदानि गत्वा प्रतिनिवृत्य )

विजयपाल, मम नामोल्लेखपूर्वकमेतत् पद्मं प्रदीयतां मे अग्रजाय ।

( उभयोः प्रस्थानम् )

[ शिवतलनिवासी उदासी धनञ्जयः प्रविशति ]

गानम्

मरणसिन्धुं तरिष्यामि विषम-झटिका-समुत्तालम्
मम भीति-भञ्जन-तरी-सहयोगम् ।
समाश्रित्य चाभयवाणीं छिन्न-नौपट-सवीर्यम् ॥
उपस्थास्यते तव कूलं मम जलयानं
प्राप्स्यते छायावट-तरुच्छायम् ।
कामयते यो मां स हि दर्शयिष्यति पन्थानम् ।
चालयिष्यामि तरीमभयमनसा, तद्धि मे करणीयम् ॥

जाने जाने चैतत् दिनान्ते चोपगम्य कूलम् ।
निवेदयिष्यामि तव करुणाशीतलपदतले
मम दुःखदिवस-रक्तकमलम् ॥

[ शिवतलवासि-प्रजासङ्घ प्रविशति ]

धनञ्जयः—मलिनं मुखमण्डलम् । कथं भोः, किं संघटितम् ?

प्रथमः—प्रभो, असहनीयः खलु राजश्यालकचण्डपालस्य प्रहारः । नासौ मानयति अस्माकं युवराजम् । तेनैतदधिकतरमसहनीयं भवति ।

धनञ्जयः—अरे, युष्माभिरद्यापि किं न विजितः प्रहारः ? कष्टमनुभूयते अद्यापि ।

द्वितीयः—प्रतीहारभूमौ नीत्वा प्रहरति ! भृशं खल्वपमानम् ।

धनञ्जयः—अरे, युष्माकं मानं स्वसमीपं मा प्रतिरक्षन्ताम्, निवेद्यताञ्चैतत् हृदयस्थितदैवतस्य पदमूले । अपमानं तत्र न कदापि प्रवेक्ष्यति ।

[ सङ्घपतिर्गणेशः प्रविशति ]

गणेशः—न पुनः सोढुं शक्नोमि । किमपि करणार्थमुदग्रं मे करयुगलम् ।

धनञ्जयः—तर्हि विकलीभूतौ ते करावितिं मन्यते ।

गणेशः—आदिशतु देव, अस्य षण्डामर्कतुल्यस्य चण्डपालस्य दण्डमपसार्य प्रहारस्य स्वरूपं तावत् प्रदर्शयामि ।

धनञ्जयः—यच्च प्रहारसंज्ञं न भवति, किं तत्प्रदर्शयितुं न शक्नोसि ? शक्तेराधिक्येन किं तत्र प्रयोजनम् ? न हि विरमन्ति अभिहतास्तरङ्गाः । स्थिरीभूते तरण्याः कर्णदण्डे विजीयते ऊर्मिभङ्गः ।

चतुर्थः—इदानीं किमुपदिश्यते भवता ?

धनञ्जयः—कृन्त्यतां तावन्मूलत एव ।

तृतीयः—देव, कथमेतत् सम्भवति ?

धनञ्जयः—समुन्नतमौलिर्यदा वक्तुं शक्ष्यसि—नहि पाड़यति प्रहार इति, तदैव छिन्नतां गमिष्यन्ति प्रहारस्य मूलानि ।

द्वितीयः—न पीड़यनीति कथनन्तु कठिनमेव ।

धनञ्जयः—यो हि यथार्थपुरुषः, नैवासौ पीड्यते। स हि आलोकशिखेव। प्रहारस्तु पीडयति जन्तुम्। यतः स हि मांस-समुच्चयः, अतः प्रहृतः क्लिष्टः सन् अनुशोचति। कथं विमूढोसि त्वम्? किं न बुध्यते मर्मार्थः?

द्वितीयः—त्वामेव अवगच्छामो वयम्, यद्यपि नावगम्यते त्वद्वचनार्थः।

धनञ्जयः—तर्हि सर्वनाशः सञ्जायते।

गणेशः—समयमपेक्षते वचनार्थस्य भावबोधः। न हि प्रतीक्ष्यते विलम्बः। अवगतोऽसि त्वम्; तेनैव सपदि तरिष्यामः।

धनञ्जयः—अनन्तरं यदैव भवति दिनावसानम्? तदा हि द्रक्ष्यसि यत् उपकूलम् उपगम्यैव तरणी निमग्नेति। यद्धि सत्यम्, अन्तस्तलाद् दृढीकृत्य यदि तद् न गृह्णासि तदा मङ्क्ष्यसि।

गणेशः—मैवं देव! तव चरणाश्रितोऽहं सर्वम् कथमिव अवगच्छामि।

धनञ्जयः—न हि बोधितोऽसि, तन्मयावगम्यते। युष्माकं दृष्टिस्तु अरुणायते, कण्ठमध्यात्तु न हि निर्गच्छति स्वरः। अपि स्वरसंयोगं कारयिष्यामि?

(गानम्)

निपीड्य नाथ निर्दयतरम्,

प्रहर प्रहर एवमेव माम्।

रे भीरो, युष्माभिस्तु प्रहारपरिहारार्थमेव प्रहाराय पलायनाय वा चेष्ट्यते। द्वयमेव तुल्यम्। एतद्द्वयेनैव पशुपर्यायो गम्यते, न खलु लभ्यते पशुपतेर्दर्शनम्।

(गानम्)

अन्तरालगतो विहरामि रहसि

शंकाकुलः परिहरामि त्वाम्।

अपनय सर्वं यदस्ति मम सर्वस्वम्

कुरु कुरु निष्किञ्चनं माम्॥

शृणु तात, अहं समस्यासमाधानार्थं मृत्युञ्जयमुपगच्छामि। वक्तुमिच्छामि यत् आघातः किं मां पीडयतीति स्वयमेव त्वं परीक्षस्वेति। यो हि भयवशं-गच्छति, प्रदर्शयति वा भीतिं, तस्य भारं स्कन्धेन समुह्य अग्रेगन्तुं नाहं सक्षमः।

( गानम् )

साधय साधय तदद्य यदस्ति तव कृत्यम्।
भवतु पराभवो मे व्रजसि त्वमुत पराजयम्।
हट्टघट्टवाटेषु क्रीडतो
हास्य-केलि-कौतुकैरपगता मम वेला।
द्रक्ष्यामि तत् किमिव क्रन्दयसि माम्
वाहयसि चाश्रुधाराम्॥

सर्वे—साधु साधु देव। ततः सहिष्ये, पश्यामि च कथं रोदयितुं शक्नोसीति।

द्वितीयः—किन्तु, कथ्यताम्—कुत्र त्वया गम्यते इति।

धनञ्जयः—राज्ञ उत्सवमुपलक्ष्य।

तृतीयः—देव, राज्ञो य उत्सवस्त्वयि स कां परिणतिं यास्यतीति किं वक्तुं शक्यते? कथं तत्र यास्यसि?

धनञ्जयः—राजसभायां कीर्तिं स्थापयिष्यामि।

चतुर्थः—त्वयि राजनि करायत्ते—नहि, नहि, तन्नैव भवेत्।

धनञ्जयः—अरे, कथं न भवेत्? नितरां सम्भवेत्, उदरपूर्तिपूर्वकं भवेत्।

प्रथमः—राज्ञो नास्ति ते भयम्, अस्माकन्तु भवति शंका।

धनञ्जयः—युष्माकं मनसि चास्ते मरणवासना, तेनैव विभीत। नाहं मारणकामः, तस्मान्नास्ति मे भीतिः। यो हि हिंसापरायणस्तमेव भयं शंसति।

द्वितीयः—यातु, वयमपि त्वया सार्द्धं गमिष्यामः।

तृतीयः—राजसकाशे ज्ञापयिष्याम आवेदनम्।

धनञ्जयः—तत्र च किं प्रार्थयितव्यम्?

तृतीयः—प्रार्थनीयं तु पुष्कलम्। पूर्यते चेत् तदैव—

धनञ्जयः—किं राजत्वं न प्रार्थयिष्यसे ?

तृतीयः—किमुपहससि, देव ?

धनञ्जयः—कथम् उपहसिष्यामि ? एकपदेन चलनात् किमस्ति अधिकं दुःखम् ? राजत्वं यदि भवति केवलं राज्ञ एव, न खलु प्रजानां, तदा खञ्जीभूतस्य तद्राजत्वस्य उल्लम्फनं दृष्ट्वा यूयं विस्मयं गन्तुमर्हथ ; परन्तु देवानां नयनात् प्रवहति अश्रुधारा। अरे, राज्ञः कल्याणार्थमेव राजत्वस्य अधिकारो युष्माभिः प्रार्थनीयः।

द्वितीयः—यदा स विताड़यिष्यति ?

धनञ्जयः—राजसभायाः शीर्षचारी यदा अभियोगं समर्थयति, तदा राज्ञो विताड़नं राजानमेव विताड़यति।

( गानम् )

विस्मरामि प्रायशोऽहम्

वाञ्छसि त्वं दातुं स्थानम्।

आहूय नाम्ना प्रसार्य तव चासनम्।

वत्स, सत्यं नु ब्रवीमि ? यावदेव तस्यैवासनमिति न परिज्ञास्यसि, तावदेव सिंहासने न प्रतिष्ठितो भविष्यत्यधिकारः, न कदापि राज्ञः, उत वा प्रजानाम्। प्रसारितेन वक्षसा तत्र नोपवेशनीयम्, युक्तकरेणैव उपवेष्टव्यम्।

( गानम् )

नास्मानवगच्छति प्रतिहारी

अवरुणद्धि ते पन्थानम्,

नय मामभ्यन्तरं

वहिः प्रतीक्षमानम्।

प्रतिहारी किं वृथैव न परिजानाति ? ललाटस्य राजतिलकं रजोराशिभिर्विलीयमानमिव दृश्यते। अन्तरं तु न वशीभूतम्, राजत्वं कर्तुं वहिरेव धावसि ? प्रागेव राजा भूत्वा तदनन्तरं राजासने उपविशति ; राजासनमध्यास्यैव कश्चिन्न हि भवति राजा।

( गानम् )

कृतस्त्वया स्वकरेण प्राणदानम्

अर्पितञ्च दानं तत्समनाथम्

न तिष्ठति लोभ-भीति-लज्जया तन्मानम् ।

एति च रजसामावरणं प्रतिदिनं परिम्लानम् ॥

प्रथमः—यदेव ब्रवीषि, कथं राजद्वारं प्रचलसीति नाऽहमवगच्छामि ।

धनञ्जयः—कथं तत् कथयिष्यामि ? भृशं खलु विभ्रान्तं मे मनः ।

प्रथमः—किं तत् ?

धनञ्जयः—यूयं यतोऽधिकं माम् आलिंगथ, ततोऽधिकमेव पृष्ठतो गच्छति युष्माकं सन्तरणशिक्षा । ममापि पारंगमने आयाता खलु बाधा । अतः, अवकाशग्रहणार्थं तत्रैवाहं गच्छामि, यत्र न मानयति मां कोपि ।

प्रथमः—राजा तु त्वामवलीलया न मोचयिष्यति ।

धनञ्जयः—अरे, कथं मोचयिष्यति ? यदि मां रोद्धुं शक्नोति, तदा किं तिष्ठति कापि चिन्ता ?

मम निगडबन्धनं यस्य साधनं भविष्यति

सपदि किं तच्चैवम् ?

समापन्नो मम बन्धनम् भविता स हि मम बन्धनम्

स किं भविष्यति चैवम् ?

को मामिच्छति वशीकर्त्तुं साहसात्

किं तद् भवेदनायासम् ?

वशीकृत्य चात्मानं निमज्जतु प्रेमरसे चासौ

किं तद् भवेदनायासम् ?

विधिलिखितमस्ति तस्य रोदनम्,

यो हि मम रोदयिता,

किं नु तद् भविष्यति चैवम् ?

द्वितीयः—किन्तु, देव, यदि तव देहमभि हस्तमुत्तोलयिष्यति, तदा नाहं सोढुं शक्ष्यामि।

धनञ्जयः—यस्य चरणतले विक्रीतोऽयं देहः, यदि तेन सह्यते, तदा युष्माभिरपि सोढ़व्यम्।

प्रथमः—भवतु, देव, आगम्यतां तावत्, श्रोष्यामः, श्रावयिष्यामश्च; अनन्तरं दैवेन यत् लिखितं तदेव भवतु।

धनञ्जयः—तदा तत्रैव यूयम् उपविशत। अत्र न कदाप्यहमागतः। मार्गादीनां वार्तां तावत् परिज्ञाय आगच्छामि।

(प्रस्थानम्)

प्रथमः—भ्रातः, किम् अवलोकितम्? उत्तरकूटस्य मानुषाणां कीदृशी आकृतिरिति? विधाता मांसपिण्डेनैव निर्मातुमारब्धवान्, न पुनः समापयितुमवकाशं प्राप्त इति मन्ये।

द्वितीयः—अपरञ्च, किं दृष्टा तेषां कच्छद्वयविरचिता वसनपरिधानरीतिः?

तृतीयः—मन्येऽहम्, आत्मानं बृहत्पोटलिकया संवद्धं कृतवान्, यदि इयत्परिमाणापि हानिर्भवति।

प्रथमः—श्रमदानार्थमेव केवलं ते जन्म स्वीचक्रुः; केवलं सप्तघट्टस्य जलमतिक्रम्य सप्तहट्टेषु परिभ्रमन्ति।

द्वितीयः—तेषां तु नास्ति कापि शिक्षा। यानि खलु तेषां शास्त्राणि, तत्रापि च किम् अस्ति?

प्रथमः—नास्ति किमपि, नास्ति किमपि। किं न दृष्टं, वल्मीकमिव तेषां लिपिसमुच्चयः?

द्वितीयः—वल्मीकास्त्वेव। तेषां विद्या यदेव स्पृशति, तदेव निकृत्य खण्डशः करोति।

तृतीयः—ततो निर्माति मृत्तिकास्तूपम्।

द्वितीयः—तेषामस्त्रेण निहन्यन्ते प्राणाः, शास्त्रेण तु निहन्यते मनः।

प्रथमः—पापम्, पापम्। अस्माकं गुरुदेवेनोच्यते—पङ्क्त्यां तेषां छाया-स्पर्शनमपि नैव नैव च करणीयम्।

तृतीयः—कथं तद्, उच्यताम्।

द्वितीयः—किं तन्न जानासि! अवसिते समुद्रमन्थने देवानां भाण्डात् यत्रैव मृत्तिकायां निपतिता अमृतधारा, तयैव मृत्तिकया निर्मिताः शिवतलाधिवासिनोऽस्माकं पूर्वपुरुषाः। अपरञ्च, दैत्यास्तु यदा देवतानामुच्छिष्टं भाण्डं पुनः पुनः संलिह्य पयःप्रणाल्यां निचिक्षिपुस्तदा भग्नभाण्डजातया दग्ध-मृत्तिकया विनिर्मिताश्चोत्तरकूटस्य जनाः। एतदर्थमेव ते तु कठिनाः; किन्तु, धिगस्तु तान् अपवित्रान्।

तृतीयः—कुतः सम्प्राप्तेयं वार्ता?

द्वितीयः—गुरुदेवः स्वयमेव एवमुक्तवान्।

तृतीयः—(गुरुमुद्दिश्य प्रणम्य) गुरो, त्वमेव सत्यः।

[उत्तरकूटस्य केषाञ्चिन्नागरिकाणां प्रवेशः]

प्रथमः—अपरं सर्वमेव सुष्ठु जातम्, किन्तु कर्मकारतनयो विभूतिः क्षत्रियवर्णे राज्ञा प्रसभं प्रतिष्ठितः—एतत्तु—

द्वितीयः—एषा त्वस्माकं गार्हस्थ्यवार्ता; अस्माकं ग्रामं प्रतिगम्य अस्मिन् विषये सिद्धान्तं स्थिरीकरिष्यामः। अधुना उच्यतां—विजयतां यन्त्रराजो विभूतिरिति।

तृतीयः—क्षत्रियस्य अस्त्रेण सार्द्धं वैश्यस्य यन्त्रं येन खलु संयोजितं, जयतु स यन्त्रराजो विभूतिः।

प्रथमः—भ्रातः, तत्र दृश्यन्ते चामी शिवतलाधिवासिनो लोकाः।

द्वितीयः—कथं त्वया अवगतम्?

प्रथमः—कर्णावरणकारि-शिरोवेष्टनं किं न पश्यसि? कीदृशमद्भुतमिव दृश्यते। ऊर्द्ध्वदेशाच्चपेटाघातेन तेषां वृद्धिस्तु केनापि निरुद्धीकृता।

द्वितीयः—भवतु, वर्तन्ते बहवो देशाः मनुष्याश्च। किन्तु, कथं त एव

केवलं कर्णावरणकारिशिरोवेष्टनं परिदधते ? श्रुतियुगस्य विरचनन्तु विधातु-र्मतिभ्रम एव इत्येवं किं तैर्मन्यते ?

प्रथमः—बुद्धिस्तु बहिर्गच्छेदित्याशङ्कया कर्णोपरि बन्धनं विरचितमिति मन्ये ।

( सर्वेषां हास्यम् )

तृतीयः—अहो, तदेव सत्यम् ? उत बुद्धिर्विभ्रान्ता सती यद्यभ्यन्तरं प्रविशति—एतदेव कारणम् ? ( हास्यम् )

प्रथमः—यद्युत्तरकूटस्थः कर्णपीडनस्यापदेवस्तेषां कर्णौ प्राप्स्यति । ( हास्यम् ) अरे शिवतलाधिवासिनो मूढाः, नास्ति स्पन्दनम्, नास्ति वचन-ध्वनिः, तत् किं सञ्जातम् ?

तृतीयः—किं युष्माभिर्न ज्ञायते यदद्यास्माकमानन्ददिवसः ? उच्यतां, विजयतां यन्त्रराजो विभूतिरिति ।

प्रथमः—कथं मौनं तिष्ठसि ? किं कण्ठो निरुद्धः ? तत् किं कण्ठपीडन-मन्तरेण शब्दो न निर्गमिष्यन्ति ? उच्यतां यन्त्रराजो विभूतिरिति ।

गणेशः—कथं विभूतेर्जयघोषणम् ? किमनुष्ठितं तेन ?

प्रथमः—किमुच्यते त्वया ? किं कृतमिति ? एतादृशः शुभसन्देशो नाधुनापि तेषां श्रुतिपथं गतः ? अहो, कर्णावरणकारिशिरोवेष्टनस्य माहात्म्यं किं दृष्टम् ?

तृतीयः—युष्माकं तृष्णायाः जलन्तु तस्यैव आयत्तीभूतम् । यदि स कारुण्यं न प्रदर्शयति, तदा तु वर्षणाभावे भेका इव विशुष्काः सन्तः यूयं सर्वे पञ्चत्वं गमिष्यथ ।

शि-द्वितीयः—तृष्णायाः जलं किं विभूतेरधिकारभूतम् ? अकाण्डे किं स दैवतः सञ्जातः ?

द्वितीयः—देवतायै अवकाशं प्रदाय दैवतकार्यं स स्वयमेव साधयिष्यति ।

शि-प्रथमः—दैवतकार्यम् ! निदर्शनमेकं तावत् प्रदर्शय ।

प्रथमः—तद्धि निदर्शनं मुक्तधाराया बन्धनम् ।

( शिवतलस्य सर्वेषामुच्चहास्यम् )

प्रथमः—युष्माभिर्मन्यते—किमयं परिहास इति ?

गणेशः—नायं परिहासः ? मुक्तधारां निरुद्धां करिष्यति ? भैरवेण स्वहस्तेन यत् प्रदत्तं, युष्मदीयः कर्मकारपुत्रस्तत् बलादपनेष्यति ?

प्रथमः—दृश्यताम्—अमुष्मिन् नभसि—

शि-प्रथमः—अहो, किं तत् ?

शि-द्वितीयः—सुविशालः लौहपतङ्गो गगनं प्रति उल्लम्फते इव ।

प्रथमः—तस्य पतङ्गस्य पद्भ्यां युष्माकं जलं निरुद्धीकृतम् ।

गणेशः—आस्तां तावदसारवचन् । कदा तु कथयिष्यसि यदमुष्य पतङ्गस्य पक्षोपर्युपविश्य युष्माकं कर्मकारतनयस्तु चन्द्रं ग्रहीतुं निर्गच्छतीति ।

प्रथमः—विचार्यतां तावत् कर्णावरणकरणस्य महत् फलम् । श्रोतव्यमपि ते न श्रोष्यन्ति ; तदर्थमेव ते अधःपातं गच्छन्ति, म्रियन्ते च ।

शि-प्रथमः—मृता अपि वयं न मरिष्याम इत्यस्माकं समयः ।

तृतीयः—सुष्ठु कृतम्, को हि तज्जीवयिष्यति ?

गणेशः—दैवतमस्माकं किं न दृष्टम् ? प्रत्यक्षो देवः । धनञ्जय-देवोऽस्माकम् ? तस्य एको देहो मन्दिराभ्यन्तरे, अपरश्च वहिस्तिष्ठति ।

तृतीयः—कर्णावरणकारिणः किं ब्रुवन्ति ? तेषां मरणं न कोऽपि निरोद्धुं शक्ष्यति ।

[ उत्तरकूटाधिवासिनां प्रस्थानम् । धनञ्जयस्य प्रवेशः ]

धनञ्जयः—रे मूढ, किमुच्यते ? युस्माकमुज्जीवनकृत्यं मदायत्तम् ? तदा तु यूयं सप्तकृत्वो मरणमालिङ्गय प्रेताः सञ्जाताः ।

गणेशः—उत्तरकूटाधिवासिनोऽस्मान् शासति यत् विभूतिना मुक्तधारायाः बन्धनं विरचितमिति ।

धनञ्जयः—किमुक्तं—बन्धनं निर्मितमिति ?

गणेशः—देव, बाढम् ।

धनञ्जयः—किं सर्वमेव न श्रुतम् ?

गणेशः—किं तच्छ्रोतव्यम् ? हास्येन तत् प्रत्याख्यातम्।

धनञ्जयः—किं युष्माकं सर्वाः कर्णाः केवलं मत्सकाशे एव न्यासरूपेण रक्षिताः ? युष्माकं सर्वेषां यत् श्रोतव्यं, तत् किं मयैव श्रवणीयम्।

शि-तृतीयः—देव, तत्र श्रवणीयं किं वर्तते ?

धनञ्जयः—किमुच्यते त्वया ? या खलु शक्तिर्दुरन्ता, तस्याः निरोधो न खल्वनायाससाध्यः। भवतु तदन्तर्देशे बाह्यतो वा।

गणेशः—देव, तदर्थमेवास्माकं तृष्णायाः जलं निरोत्स्यति ?

धनञ्जयः—तत्तु वार्तान्तरम्। भैरवस्तन्न सहिष्यते। तदपेक्ष्यतां तावत्। अहन्तु अनुसन्धाय आगच्छामि। अरे, विश्वमिदं वाणीमयम्। यतः श्रवणं निरुद्धं करिष्यसि, मृत्युबाणश्चागमिष्यति तस्मादेव दिङ्मण्डलात्।

(धनञ्जयस्य प्रस्थानम्)

[शिवतलस्य कस्यचिन्नागरिकस्य प्रवेशः]

शि-तृतीयः—अरे, विषणः समागतः! कः सन्देशः ?

विषणः—युवराजः शिवतलात् राज्ञा समाहूय आनीतः। अतःपरं तत्र तस्यावस्थाने नास्त्यनुमतिः।

सर्वे—तन्न भविष्यति, कथमपि तन्न भविष्यति।

विषणः – तदा किं करिष्यथ ?

सर्वे—प्रत्यानेष्यामः।

विषणः—केनोपायेन।

सर्वे—बलात्कारेण

विषणः—किं राज्ञा सह शत्स्यथ ?

सर्वे—न वयं राजानं स्वीकुर्मः।

(रणजितो मन्त्रिणश्च प्रवेशः)

रणजित्—कं न स्वीकुरुथ।

सर्वे—प्रणमामः।

गणेशः—विचारार्थं भवत्सकाशमागच्छामो वयम्।

रणजित्—कं विषयमधिकृत्य विचारः ?

सर्वे—वयं युवराजं प्रार्थयामः ।

रणजित्—किमुच्यते !

प्रथमः—वयं युवराजं शिवतलं नेष्यामः ।

रणजित्—ततो मनस आनन्देन राजस्वप्रदानं विस्मरिष्यसि ?

सर्वे—अन्नाभावात् वयं सर्वे मृतकल्पाः सञ्जाताः ।

रणजित्—कुत्र युष्माकं दलपतिः ?

द्वितीयः—( गणेशं प्रदर्श्य ) अत्रैवास्माकं दलपतिर्गणेशः।

रणजित्—नासौ । युष्माकं सन्न्यासी ।

गणेशः—अदूरे तत्रभवान् आगच्छति ।

( धनञ्जयस्य प्रवेशः )

रणजित्—किमिमे प्रजाजनास्त्वया उत्तेजिताः ?

धनञ्जयः—बाढम् , तान् उत्तेजयामि, स्वयमेवोऽपि उत्तेजितो भवामि ।

( गानम् )

आकुलीकृत्य दिशि दिशि मां विहरति यो
न जाने तमुन्मादम् ।
अभिव्याप्य गगनमहो वादयति समीरे
किमसौ मोहनवेणुं मधुरम् ।

अस्तं याति याति वेला
भवति कीदृशी खलु प्रमत्तस्य खेला—
आकुलीकरोति चाहूय मामसौ न चायाति वशम्
अनुसन्दधामि तं गिरिकानने, विलपामि हताशम् ॥

रणजित्—उन्मत्त इव आचर्य नार्हसि त्वं प्रासङ्गिकीं वार्तामन्तरितुम् । उच्यतां—किं राजस्वं दास्यसि न वा ?

धनञ्जयः—महाराज, न हि, न दास्यामः ।

रणजित्—न दास्यसि, ईदृशा ते स्पर्धा !

धनञ्जयः—यत् खलु न युष्मदीयं, नार्हामि तत् तुभ्यं प्रदातुम्।

रणजित्—किं न खलु मदीयम्?

धनञ्जयः—मम उद्वृत्ते अन्ने एव तवाधिकारः, न तु क्षुधायाः अन्ने।

रणजित्—किं त्वयैव प्रजाजनाः राजस्वप्रदानान्निवारिताः?

धनञ्जयः—ते तु भयाद्दातुमिच्छन्ति, अहं निवार्य ब्रवीमि—येन खलु प्राणाः प्रदत्तास्तस्मै एव प्राणाः प्रदातव्याः।

रणजित्—तव आश्रयं प्रसार्य तेषां भयं प्रावृणोषीति हृयम्। बहिराश्रयावरणस्य कुत्रापि यदि छिद्रं भवति, तदा आभ्यन्तरीणं भयं सप्तकृत्वो बलान्निर्गमिष्यति। तदा तु पञ्चत्वं गमिष्यन्ति। पश्य सन्न्यासिन्, ललाटे तव दुःखं लिखितमास्ते।

धनञ्जयः—यद्दुःखं ललाटे लिखितमासीत्, वक्षस्येव तद्दुःखं समानीतम्। दुःखस्य विधाता तत्रैव निवसति।

रणजित्—(प्रजागणं प्रति) अहं युष्मान् ब्रवीमि—यूयं सर्वे शिवतलं प्रतिगच्छथ। सन्न्यासिन्, त्वया अत्रैव अवस्थातव्यम्।

सर्वे—स्थितेष्वस्माकं प्राणेषु न हि तद्भविष्यति।

(गानम्)

धनञ्जयः— तिष्ठतीति स्थापयसि कं
कदा भवेत्ते वचः सफलम्।
न हि सिध्यति चेष्टनं भ्रातः
स्थास्यति यदेव ध्रुवम्॥

राजन्, आकृष्य किमपि रक्षितुं नार्हसि। अनायासेन रक्षणे यदि शक्तिर्विद्यते तदैव रक्षणं सम्भविष्यति।

रणजित्—को हि निर्गलितार्थः?

धनञ्जयः—यः सर्वं ददाति, स सर्वमेव रक्षति। लोभात् यद्रक्षितुमिच्छसि, तद्धि भविष्यति चौर्यलभ्यपदार्थः, तत्तु न स्थास्यति।

( गानम् )

यथेच्छं साधय तद्,

बलाद्वा मारय वा ;

यमभिस्पृशति तस्य वेदनम्,

सहते स हि सह्नीयम् ।

राजन्, बलादपहृयते यदि विश्वं, तद्धि तवैव भविष्यतीति त्वया यत् चिन्त्यते, तदयं तवैव प्रमादः । त्यागेनैव यत् प्राप्यते, मुष्टिपेषणेन तदपह्रियते इत्येतत् विचारणीयम् ।

( गानम् )

मन्यसे तद् भाव्यं यदिच्छसि त्वम्,

नर्तयसि चेति निखिलं विश्वम्,

ज्ञास्यसीति क्षणान्मुक्तनयनो भवत्येव तत् यदंपि न भाव्यम् ॥

रणजित्—मन्त्रिन्, सन्न्यासिनमत्रैव निरुद्धं कुरु ।

मन्त्री—महाराज,—

रणजित्—आदेशोऽयं किं तव नानुमतो भवति ?

मन्त्री—शासनस्य भीषणं यन्त्रं तु निर्मितम् ? अनन्तरं पुनरपि भयं यदि प्रवर्द्धते तदा सर्वाण्येव भग्नीभविष्यन्ति ।

प्रजाः—नैतद्भविष्यत्यस्माभिः सह्नीयम् ।

धनञ्जयः—प्रतिगच्छथ यूयम् ; अहं ब्रवीमि—प्रतिगच्छथ ।

प्रथमः—देव, किं त्वया न ज्ञातम् यत्—युवराजोऽप्यपहृतः ।

द्वितीयः—तदा तु कस्य साहाय्येन मनसि शक्तिमुपलप्स्ये ?

धनञ्जयः—ममैव शक्त्या किं युष्माकं शक्तिः ? ईदृशवाक्योच्चारणेन मामपि दुर्बलीकरोषि ।

गणेशः—तेन वचनेनाद्य मा वञ्चय । एकस्मिन्नेव त्वयि अस्माकं सर्वशक्तिर्वर्तते ।

धनञ्जयः—तदा तु पराजितोऽहम् । मयापि दूरं गन्तव्यम् ।

सर्वे—देव, कथमेतत् ?

धनञ्जयः—मां प्राप्य आत्मानं विसर्जयिष्यसि ? एतादृशीं क्षतिं पूरयितुं किमस्ति मे शक्तिः । अतोऽहं नितरां लज्जे ।

प्रथमः—देव, कथमेवम् ? भवतु, यदेव त्वया आदिश्यते, तदेवास्माभिः करिष्यते ।

धनञ्जयः—मां परित्यज्य गम्यताम् ।

द्वितीयः—गत्वा च किं करिष्यामि ? अस्मान् विहाय स्थातुमर्हसि किम् ? किमस्मासु नास्ति ते प्रणयः ?

धनञ्जयः—स्नेहात् पेषणेन युष्माकं हननात् स्नेहेन युष्माकं परित्याग एव वरम् । गम्यतां, गम्यताम् ; अलं वचनान्तरेण ।

सर्वे—देव अथ किम् ? प्रचलामि ; किन्तु—

धनञ्जयः—अरे, किन्त्विति किम् ! सर्वथा निष्किन्तुरिति भूत्वा उन्नतशीर्षेण गम्यताम् ।

सर्वे—अस्तु चैतत् । तदस्माभिः प्रचल्यते ।

धनञ्जयः—किं तच्चलनमिति कथ्यते ? सवेगं प्रचल्यताम् ।

गणेशः—प्रचलामः । किन्त्वस्माकं बलबुद्धिस्त्वत्तै व परित्यक्ता ।

( प्रस्थानम् )

रणजित्—अहो सन्न्यासिन्, किं चिन्तयसि ? कथं मौनमवलम्बसे ?

धनञ्जयः—राज्ञा तु वयं भावनामासादिताः ।

रणजित्—अथ किंनिमित्ता भावना ?

धनञ्जयः—तव चण्डपालेन दण्डविधानेनापि यन्न सम्भावितम् , मया तु तदेव कृतमिति मन्ये । एतावत्कालं मयानुमतं यन्मयैव तेषां बलबुद्धिः संवर्द्धते । तेषां बलबुद्धिर्मयैवाहृतेति मत्समक्षमेव तैरद्याभिहितम् ।

रणजित्—केन तत् सम्भवति ?

धनञ्जयः—ते तु मया यथैव प्रोत्साहितास्तथैव न पक्षीकृताः । ऋणन्तु चैषामधिकं, तदा तु केवलं धावनेन ऋणं नापगतं भवति । तैश्चिन्त्यते—

विधातुरप्यहं महत्तरः; तस्य सविधे तेषां यद्गणां तन्मुक्तिं त्वहं विफलीकर्तुं शक्नोमीति। अतश्चक्षुर्निमील्य मामेवालिङ्ग्य तिष्ठन्ति।

रणजित्—तैस्त्वमेव दैवतरूपेण परिगृहीतोऽसि।

धनञ्जयः—अतो मत्सकाशमेत्य निरुद्धाः सञ्जाताः, मूलदेवतां न हि सम्प्राप्तास्ते। अभ्यन्तरादेव यः खलु तान् परिचालयितुमशक्नुयत्, वहिर्देशात् स एव मया निरुद्धः।

रणजित्—यदा तु राजस्वं प्रदातुं ते आगच्छन्ति, तदा तु ते वाध्यन्ते; अपि तु यदा दैवतोद्देशिनो पूजा तवैव चरणान्तिकमायाति, तदा किं तत् त्वां न वाधते!

धनञ्जयः—नूनम्, नूनमेव। कथं न वाधते? धावनेन पलायनमेव आकाङ्क्ष्यते। मामर्चयित्वा ते त्वभ्यन्तरे ऋणग्रस्ता भवन्ति; तेषां ऋणस्य दानभारो ममाप्युपरि निपतिष्यति। देवता तु न कदापि मुक्तिं प्रदास्यति।

रणजित्—अधुना किं त्वया करणीयम्?

धनञ्जयः—कर्तव्यं हि अन्तरालावस्थानम्। यदि वा मयैषां सुदृढं विरचितो मनसां वन्धस्तदा हि भैरवस्तव विभूतिं माञ्च युगपदभिधावतु।

रणजित्—तर्हि कथं पुनर्विलम्वः? गम्यतामन्तरालम्।

धनञ्जयः—मयि चान्तरालं गते ते हि तव चण्डपालं ग्रीवादेशे निपत्य आक्रमिष्यन्ति। तदा तु यो दण्डो मत्प्राप्यः स हि तेषामेव शिरःकपालोपरि निपतिष्यति। अनयैव चिन्तया नाहमपसर्तुं क्षमः।

रणजित्—अपसरणे अशक्ते त्वयि अहमेव अपसारयिष्यामि। भो उद्धव, शिविरे निरुध्यतामसौ सन्न्यासी।

( गानम् )

धनञ्जयः— शृंखलं ते नहि करिष्यति मां विकलम्,
प्रहारेण तेन खलु मरिष्यति मम हृदयम्।
तदीयकरांकितं प्रेषितमुक्तिपत्रम्

अधितिष्ठति निगूढं
मम मानसमर्मस्थलम् ।
न च निरोत्स्यति मां युष्मत्पाशबन्धनम् ॥
येनाध्वना च करोमि गतागतम्
न हि त्वत्प्रहरी लभेत तत्सन्धानम्,
सम्प्राप्तोऽहं तदीयमेव द्वारम्,
द्वारे ते रोत्स्यति मां कथम् ।
त्वद्भयान्नहि शङ्कते मे हृदयम् ॥

( धनञ्जयेन सह उद्धवस्य प्रस्थानम् )

रणजित्—मन्त्रिन्, वन्दिशालायामभिजितं निरोद्धय समागच्छ । द्रक्ष्यसि चेद् वत्स आत्मनः कृतकर्मार्थमनुतप्तस्तदा—

मन्त्री—महाराज, भवान् स्वयमेव गत्वा वारमेकम्—

रणजित्—नहि, नहि । स हि स्वराज्यविद्रोही ; यावदात्मन अपराधं न स्वीकरोति, तावदेव तस्य मुखं न द्रक्ष्यामि । अहन्तु राजधानीं प्रचलामि । तत्रैव मह्यं सन्देशं प्रेरय ।

( राज्ञः प्रस्थानम् )

[ भैरवपन्थिनः प्रवेशः ]

( गानम् )

तिमिरहृद्विदारण
ज्वलदग्नि-निदारुण
मरुश्मशान-सञ्चर
शंकर शंकर !
वज्रघोष-वाणी
रुद्रशूलपाणे
मृत्युसिन्धु-सन्तर ।

( प्रस्थानम् )

[ उद्धवस्य प्रवेशः ]

उद्धवः—किमिदम्? युवराजेन सह साक्षात्कारमकृत्वैव प्रचलितो महाराजः।

मन्त्री—मुखदर्शनेन यदि प्रतिज्ञाभङ्गः स्यादित्येव तस्य शङ्का। एतावत्कालमसौ स हि शिविराभ्यन्तरमपि गन्तुं नाशक्नोत्, नासीच्च समर्थः शिविरपरित्यागार्थं पादक्षेपेऽपि। भवतु, गच्छामि तावत् युवराजं द्रष्टुम्।

( प्रस्थानम् )

[ द्वयोः स्त्रीजनयोः प्रवेशः ]

प्रथमा—मातृस्वसः, कथं ते सर्वे ईदृशाः क्रुद्धाः सञ्जाताः? तैः कथमुच्यते यद् युवराजेन अन्याय्यं कृतम्—नाहमेतद् वोद्धुं शक्नोमि, न च सोढुं शक्तः।

द्वितीया—उत्तरकूटानां ललनाऽपि त्वं नावगच्छसि? नन्दिसंकटस्य पन्थास्तत्रभवता उन्मोचितः—इत्येव क्रोधहेतुः।

प्रथमः—नाहं जाने तत्र कोऽपराध इति। किन्तु, युवराजेनान्यायः समाचरित इति नाहं विश्वसिमि।

द्वितीयः—वयसा त्वं हि तरुणी। वहिरङ्गरूपेण ये खलु साधव इव दृश्यन्ते त एव भृशं सन्देहकारणमित्येकदा महता दुःखेनैव ज्ञास्यसि।

प्रथमः—किन्तु, युवराजे को हि युष्माकं सन्देहः?

द्वितीयः—शिवतलस्य नरान् वशीकृत्य अधुनैव स उत्तरकूटस्य सिंहासनं जेतुमभिलषति—अतः स कालविलम्बं न करिष्यतीति सर्वे वदन्ति।

प्रथमः—तस्य सिंहासनेन किं प्रयोजनम्? सर्वेषां हृदयानि तु तेन विजितानि। ये खलु तं निन्दन्ति, तेष्वेव विश्वासं स्थापयिष्यामि, न खलु युवराजे विचित्रमेतत्!

द्वितीयः—मैवम्। नगरया वालिकासि। तवैव मुखान्न शोभते ईदृशी कथा। समग्रदेशस्य विश्वे जनाः यमभिशपन्ति, अकाण्डे त्वं तस्य—

प्रथमः—सर्वेषां नराणां पुरतो दण्डायमाना अहमेवं वक्तुं शक्नोमि यत्—

द्वितीयः—मैवं मैवम्। तूष्णीम्भव।

प्रथमः—कथं तूष्णीं भविष्यामि ? नयने विप्लाव्य मे निर्गलितुमिच्छति अश्रुधारा। युवराजे वर्तते मे सर्वाधिको विश्वास इति प्रकाशयितुं यत्-किञ्चिदपि कर्तुमिच्छामि। ममेदं दीर्घालकमद्य भैरवसकाशे न्यासरूपेण रक्षिष्यामि वक्ष्यामि च—देव, त्वमेव विज्ञापय यत् युवराजस्यैव जातो विजयः ; ये खलु निन्दाकारिणस्ते तु मिथ्याचारा इति।

द्वितीयः—मौनं, मौनं मौनमवलम्बस्व! कुतोऽपि कश्चिच्छृणुयात्। बालिकेयं विपदं संघटयिष्यतीति मन्ये।

(उभयस्य प्रस्थानम्)

[ उत्तरकूटस्य नागरिकसंघस्य प्रवेशः ]

प्रथमः—न कथमपि मोचयिष्यामि। आगम्यतां तावत्, राजसकाशं प्रचलामः।

द्वितीयः—तेन किं भविष्यति ? युवराजस्तु हृदयमणिरिव। तस्यापराधस्य विचारं कदापि स कर्तुं न शक्नुयात्, परन्त्वस्मभ्यं प्रकुपिष्यति।

प्रथमः—भवतु स कुपितः ; तद्भवतु यल्ललाटे लिखितमस्ति, सत्यमेव कथयिष्यामि।

तृतीयः—परन्तु, युवराजोऽस्मभ्यमीदृशीं प्रीतिं प्रदर्शयति यदाकाशात् चन्द्रमपि समानीय अस्मभ्यं दास्यतीति नाटयति ; अन्यतश्च संगोपनेन तस्येव कीर्तिः! अकाण्डे शिवतलं तत्सकाशे उत्तरकूटात् प्रियतरं सञ्जातम्!

द्वितीयः—भ्रातः उच्यतां तर्हि, सति चैवं, पृथिव्यां कुत्रास्ति धर्मः ?

तृतीयः—कमपि परिज्ञातुं नास्ति चोपायः।

प्रथमः—राजा तं न शास्ति चेत्, तदा वयमेव तस्य दण्डं विधास्यामः।

द्वितीयः—किं करिष्यसि ?

प्रथमः—देशेऽस्मिन् तस्य स्थानं नास्ति। यः पन्थास्तेन खनितस्तेनैव पथा तेन निर्गन्तव्यम्।

तृतीयः—किन्तु, चवुयापल्लीवासिभिरुक्तम्—नाधुना स शिवतलमध्यास्ते, इदानीं राजप्रासादेऽपि न लभ्यत इति ।

प्रथमः—नूनं स राज्ञा गोपितः ।

तृतीयः—किं गोपितः ? भवतु, प्राकारं विदार्य वहिरानेष्यामि ।

प्रथमः—गृहे अग्निं संयोज्य वहिरानेष्यामि ।

तृतीयः—अस्मान् वञ्चयिष्यति ! मरणमेव वरं, तथापि—

[ उद्धवेन सह प्रविशति मन्त्रिमहोदयः ]

मन्त्री—किं जातम् ?

प्रथमः—न हि चलिष्यति चातुर्य्यम् । वहिरानीयतां युवराजः ।

मन्त्री—अरे, वहिरानेतुं कोऽहम् ?

द्वितीयः—यूयमेव तस्मै मन्त्रणां प्रदाय तं—न हि शक्ष्यसि त्वम्, वयमप्याकृष्य वहिरानेष्यामः ।

मन्त्री—तथास्तु, गृहाण तावत् स्वहस्तेन राज्यशासनभारम् । मोच्यतां चासौ कारागृहात् ।

तृतीयः—कारागृहात् ?

मन्त्री—महाराजेन स वन्दीकृतः ।

सर्वे—विजयतां महाराजः । जयोऽस्तु उत्तरकूटानाम् ।

द्वितीयः—अरे, प्रचलत तावत् । वयं कारागृहं प्रवेक्ष्यामः । तत्र प्रविश्य—

मन्त्री—गत्वा किं करिष्यसि ?

द्वितीयः—विभूतेः कण्ठमाल्यात् पुष्पाण्यपसार्य रज्जुन्तु तस्य कण्ठे प्रलम्बयिष्यामि ।

तृतीयः—कथं कण्ठे, हस्ते एव प्रयोक्ष्यामहे । वन्धन-निर्माण-जनित-सम्मानस्योच्छिष्टेन मार्गमोचनकरौ हस्तौ रज्जुवद्धौ भविष्यतः ।

मन्त्री—मार्गभङ्गहेतुको युवराजस्यापराधः ; युष्माभिस्तु भवति शासन-व्यवस्था विपर्यस्ता ; अपराधः किं नास्ति तत्रापि ?

द्वितीयः—अहो, एषा ह्यप्रासंगिकी वार्ता। भवतु, उत्तमम्; यदि शासनव्यवस्था अस्माभिर्विपर्यस्ता भवति, तदा किं भविष्यति?

मन्त्री—पदतलस्था मृत्तिका न हि रोचते इति हेतोः शून्ये उल्लम्फनं भविष्यति। तदपि न रोचिष्यते इति ब्रवीमि। प्रागेव काचित् व्यवस्था करणीया, तदनन्तरं चापरा व्यवस्था विपर्ययं नेया।

तृतीयः—भवतु, तर्हि तिष्ठतु तावत् कारागृहम्। राजप्रासादस्य पुरतो महाराजस्य जयध्वनिमुच्चार्य आगच्छामः।

तृतीयः—अरे भ्रातः, दृश्यताम्—अस्तं गतो भास्करः, जायते च गगनं तमसावृतम्; विभूतेर्यन्त्रचूडा त्वधुनाऽपि देदीप्यते। मन्ये, आतपासवं निपीयेव सञ्जातं तदारक्तम्।

द्वितीयः—अपरञ्च भैरवमन्दिरस्य त्रिशूलं संश्रित्य सन्तिष्ठते निमज्जन-भयादिव अस्तायमानं मार्कण्डरश्मिजालम्। विचित्रमेतत्।

(नागरिकाणां प्रस्थानम्)

मन्त्री—युवराजं शिविरेऽस्मिन् निरोद्धुं कथं महाराजेन समादिष्टम् अधुना तदवगम्यते।

उद्धवः—कथम्?

मन्त्री—तद्धि प्रजाभ्यस्तस्य रक्षणार्थमेव। किन्त्विदं सुष्ठु न मन्यते। जनानामुत्तेजना केवलमेव प्रवर्द्धते।

[सञ्जयस्य प्रवेशः]

सञ्जयः—महाराजाय मम आग्रहस्याधिक्यं प्रदर्शयितुं साहसं न प्रादर्शयम्, तेन चेत् दृढतरो भवति तस्य संकल्पः।

मन्त्री—राजपुत्र, शान्तो भव। मा कुरु विपदो जटिलतावर्द्धनम्।

सञ्जयः—विद्रोहं संत्यज्याहमपि वन्दीभवितुमिच्छामि।

मन्त्री—तस्माद् वरं मुक्तः सन् वन्धनमोचनमेव चिन्तय।

सञ्जयः—तदर्थमेवाहं प्रजानां सकाशं गतवान्। मया तु ज्ञातं यत् युवराजं प्रति प्रवहति तेषां प्राणाधिका प्रीतिः; ते न कदापि क्षमिष्यन्ते

तस्य बन्धनम् । गत्वाऽहमपश्यं यत् नन्दिसंकटस्य वार्तां संप्राप्य सञ्जातास्ते क्रोधानलेन प्रदीप्ताः ।

मन्त्री—तदा हि ज्ञायतां तावत्—बन्दिशालायामेव विपन्मुक्तो युवराज इति ।

सञ्जयः—चिरमेवाहं तस्यानुगतः । अतो बन्दिशालायामेव तमनुगन्तुं प्रदीयतामनुमतिः ।

मन्त्री—तेन किं भविष्यति ?

सञ्जयः—पृथिव्यां न कश्चिदेकको मनुष्यः केवलमेकः ; स तु अर्द्ध एव ; ग्यपरेण सह संमिल्य प्राप्नोति स ऐक्यम् । युवराजेन सह ममाप्यस्ति तदेव मेलनम् ।

मन्त्री—राजपुत्र, तत्तु मया समर्थ्यते । किन्तु, यत्र हि यथार्थतस्तत् मेलनं, तत्र अन्तिकावस्थानेन नास्ति किमपि प्रयोजनम् । आकाशस्य जलदं, समुद्रस्य च सलिलमान्तररूपेण एकमेव । अतो बहिरेव पृथग्भूत्वा ताभ्यां सार्थकीक्रियते ऐक्यम् । अद्य खलु यत्रैव नास्ति युवराजस्तत्रैव स त्वय्येव प्रकाशमापद्यते ।

सञ्जयः—मन्त्रिन्, वचनमिदं त्वदीयमिति न श्रूयते ; एतद्धि युवराजस्य वचनमिव प्रतिभाति ।

मन्त्री—अत्र अनिलेऽपि विकीर्णं तस्य वचनम् । व्यवह्रियतेऽस्माभिरथ च विस्मर्यते यदिदं तस्य उत वा ममेति ।

सञ्जयः—किन्तु, वाक्यमिदं स्मारयित्वा भवता साधु कृतम् ; दूरत एव तस्यैव कार्यं साधयामि । तन्महाराजसमीपं गच्छामि ।

मन्त्री—किं साधयितुम् ?

सञ्जयः—शिवतलस्य शासनभारं प्रार्थयिष्यामि ।

मन्त्री—कालो ह्ययं संकटसंकुलः ; अधुना किम्—

सञ्जयः—तदर्थमेव उपयुक्तोऽयं समयः ।

( उभयोः प्रस्थानम् )

[ विश्वजितः प्रवेशः ]

विश्वजित्—कोऽसौ ? ननु उद्धवः किम् ?

उद्धवः—अहमस्मि, महाराज-खुल्लतातः ।

विश्वजित्—अन्धकारार्थमपेक्षणरतोऽहम् , किमधिगतं मम पत्रम् ?

उद्धवः—अधिगतम् ।

विश्वजित्—अपि तदनुसारेण सम्पन्नं कार्यजातम् ?

उद्धवः—क्षणेनैव ज्ञातुं शक्ष्यसि । किन्तु—

विश्वजित्—मनसि संशयं मा कुरु । स्वयमेव तस्य मुक्तिप्रदाने न खलु सन्नद्धो महाराजः । किन्तु, तस्य अज्ञातभावेनापरः कोऽपि यदि कार्यमिदं साधयति तदा स जीविष्यति ।

उद्धवः—किन्तु, स अपरः कोऽपि न कदापि तस्य क्षमाभाजनं भविष्यति ।

विश्वजित्—सन्ति मम सैनिकाः । ते तु त्वां तव प्रहरिणश्च निरुध्य नेष्यन्ति । दायभारस्तु ममैव ।

[ नेपथ्ये—अग्निरग्निः ! ]

उद्धवः—अरे, सर्वनाशः । कारागार-संलग्न-पाकशालायाः शिविरे विहितः अग्निसंयोगः । अस्मिन्नवकाशे वलिद्वयं वहिष्करोमि तावत् ।

[ कियत्क्षणेभ्यः परमभिजितः प्रवेशः ]

अभिजित्—अये, पितामहः समागतोऽसि ।

विश्वजित्—भोः, त्वां निरोद्धुमागतोऽहम् । मोहनगृहं त्वया गन्तव्यम् ।

अभिजित्—मामद्य केनाप्युपायेन निरोद्धुं न शक्ष्यसि—न हि क्रोधेन, नापि स्नेहेन । युष्माभिरेव वह्निसंयोगः कृत इति युष्माभिश्चिन्त्यते ? न हि ; अग्निसंयोगोऽयं येन केनाप्यभविष्यत् । अद्य कारावस्थाने नास्ति मे अवकाशः ।

विश्वजित्—कथं भ्रातः, किं तव कार्यम् ?

अभिजित्—जन्मलग्नस्य ऋणं तु परिशोधनीयम् । स्रोतसः पन्था मे धात्री, तस्या बन्धनमुक्तिं सम्पादयिष्यामि ।

विश्वजित्—तदर्थं सन्त्येव वहवः कालाः, न हि अद्यैव ।

अभिजित्—कालोऽधुनैव समागत इति जानामि । किन्तु, स पुनः किमागमिष्यतीति न केनापि ज्ञायते ।

विश्वजित्—वयमपि तव सहयोगिनो भविष्यामः ।

अभिजित्—न हि, सर्वेषां कार्यं न कदाप्येकमेव, ममोपरि न्यस्तं यत्कार्यं तत्तु एककस्य ममैव ।

विश्वजित्—शिवतलस्य ये भक्तास्तवैव कर्मणि साहाय्यार्थमपेक्षन्ते, किं तान् नाह्वयिष्यसि ?

अभिजित्—यदाह्वानं मया श्रुतं तदाह्वानं यदि तेऽपि शृणुयुस्तदा ते मदर्थं नापेक्षेरन् । मदीयाह्वानेने ते पन्थानं विस्मरिष्यन्ति ।

विश्वजित्—भ्रातः, सर्वं तमसाच्छन्नं भवतीव ।

अभिजित्—यत आह्वानमागतं, तस्मादालोकोऽपि आगमिष्यति ।

विश्वजित्—त्वयि बाधाप्रदाने नास्ति मे पर्याप्ता शक्तिः । अन्धकारे असहायो गच्छसि, तथापि तुभ्यं विदायं प्रदाय मया प्रत्यागन्तव्यम् । केवलमाश्वासवाक्यमेकमुच्चारय यत्—पुनरेव मेलनं घटिष्यते ।

अभिजित्—त्वया साकं मम विच्छेदस्य नास्ति कदाप्यवकाशः—वाक्यमिदं सदैव स्मरणीयम् ।

[ भिन्नमार्गेणोभयोः प्रस्थानम् । धनञ्जयस्य प्रवेशः ]

गानम्

अनलः सहोदरो मे, घोषयामि तव जयगानम् ।
न दृष्टपूर्वं रक्तरूपं ते निगडभञ्जन करम् ।
उन्मादयसि कस्य गीतौ गगनमभि प्रसार्य करम्
किमिव मधुरमहो आनन्दमयमिति अभय-नृत्यम्
मुह्यति ततो हृदयम् ।
जन्मनः स्यात् यदावसानम् अपयास्यति चार्गलबन्धः
भवेद् भस्मीभूतं तदा करपादपाशवन्धनम् ।

तदा तवाङ्गेषु भवेन्ममाङ्गरङ्गनर्तनम्

प्रशमिष्यति तापैस्तापचयः, भूयादापन्मोचनम् ॥ ( प्रस्थानम् )

[ प्रविशति वटुः ]

वटुः—देव, दिवसस्तु शेषं गतः, समायाति च तमिस्रा ।

धनञ्जयः—वत्स, वहिरालोकोपरि निर्भरशीलतैवास्माकमभ्यासः ; अतः समागते अन्धकारे सर्वमेव तिमिराच्छन्नं पश्यामः ।

वटुः—भैरवस्य नृत्यमद्यैवारप्स्यते इत्यनुमितं मया, किन्तु, यन्त्रराजेन किं यन्त्रेण संवद्धं तस्यापि करचरणम् ?

धनञ्जयः—आरभते यदा भैरवस्य नृत्यं, तदा तु तच्चक्षुर्भ्यां न दृश्यते । प्रकाशं गच्छत्येव तद् अवसान-समये ।

वटुः—प्रभो, आश्वासं देहि, भृशं भीतोऽस्मि । जागृहि, भैरव, जागृहि । आलोको निर्वाणमाप्तः, निमज्जितस्तु पन्थाः ; हे मृत्युञ्जय ; न श्रूयते हि प्रत्युत्तरध्वनिः । भयं प्रदर्श्य भयमाजहि ! जागृहि, भैरव, जागृहि !

( प्रस्थानम् )

[ उत्तरकूटस्य नागरिकाणां प्रवेशः ]

प्रथमः—मिथ्यैव वार्ता । राजधान्याः कारागारे स नास्त्येव । सुगुप्तं सुरक्षितश्चासौ ।

द्वितीयः—कुत्र स गोपायितस्तन्नु पश्यामि ।

धनञ्जयः—न हि तात, कुत्रापि स गोपायितुं न शक्यते । निपतिष्यति प्रहारः, द्वारं भग्नीभविष्यति, विच्छुरिष्यत्यालोकरश्मिः—सर्वत्र प्रकाशं गमिष्यति ।

प्रथमः—को हि पुनश्चासौ । अकाण्डे त्रासितं मे वक्षसोऽभ्यन्तरम् ।

तृतीयः—तत्तु सुष्ठु सञ्जातम् । अस्ति केनापि प्रयोजनम् । तदुदासिनमिमं निरोधय । तं बधान ।

धनञ्जयः—यः खलु मनुष्यः आत्मसमर्पणं कृत्वैव तिष्ठति, केनाप्युपायेन तं निरुद्धीकरिष्यसि ?

प्रथमः—त्यज्यतामौदासीन्यम्, नास्माभिस्तानि मान्यते।

धनञ्जयः—अमाननमेव वरम्। प्रभुः स्वयमेव करे धृत्वा युष्मान् मानयिष्यति। भाग्यवन्तो यूयम्। यान् खलु वराकान्नहं जानीमस्तेषां सम्माननैव हारितो गुरुदेवः। तेषां मानप्रदर्शनताडनया अहमपि देशात्ताडितः।

प्रथमः—कस्तावत्तेषांगुरुः?

धनञ्जयः—यस्य हस्तेन ते निगृहीताः भवन्ति, स एव।

प्रथमः—तदा तु गुरुकृत्यं त्वय्येवास्माभिरारब्धव्यमित्यत्र किं त्वया मन्यते?

धनञ्जयः—वत्स, अनुमोदयामि तत्; पश्यामि च यथायथ-पाठने किं शक्तिरस्ति न वेति। भवतु तस्यैव परीक्षणम्।

द्वितीयः—त्वमेवास्माकं युवराजमवलम्ब्य किञ्चित् चातुर्यं करोषीति भवत्यस्माकं सन्देहः।

धनञ्जय—युष्माकं युवराजो मत्तोऽपि चतुरतरः। किं सम्भवति तस्मिन् मे चातुर्यम्? मामेवावलम्ब्य प्रसरति तस्य चातुर्यम्।

द्वितीयः—अरे, श्रुतमेतत्? अस्य वाक्यस्य अस्त्येव काचित् व्यञ्जना। द्वयोर्मध्ये प्रचलति काचिन्मन्त्रणा।

प्रथमः—अन्यथा एतादृश्यां गभीरायां रजन्यां कथमत्र परिभ्रमति? युवराजं शिवतले अपसारयितुमेते चेष्टन्ते। अत्रैव तं निरूद्धीकृत्य गच्छामि। अनन्तरं संप्राप्ते तु युवराजस्य सन्धाने तेन साकं करिष्यामि विचारणम्। भोः कुन्दन, वधानेमम्; रज्जुस्तु वर्तते तवैव सन्निकर्षे।

कुन्दनः—गृह्यतां रज्जुः। त्वमेव वधान।

द्वितीयः—अरे, किं यूयमुत्तरकूटनिवासिनः? देहि, मह्यमेव देहि। (बन्धनं विरचयन्) भोः कीदृशमनुभूयते? अथ किं ब्रवीति ते गुरुः?

धनञ्जयः—तेन सुदृढं निरुद्धोऽस्मि। न हि मोचयति चासौ विनायासेन।

[ भैरवपन्थिनः प्रवेशः ]

गानम्

तिमिर-हृद्-विदारण,

ज्वलदग्नि-निदारुण,

मरु-श्मशान-सञ्चर

शंकर हे शंकर !

वज्रघोषवाणी

रुद्र शूलपाणे

मृत्युसिन्धु-सन्तर

शंकर हे शंकर ! ( प्रस्थानम् )

कुन्दनः—तत्र पश्यतु तावत्। गोधूलेरालोकं यावदेव निर्वाणं गच्छति, अस्माकं यन्त्रचूडा तावदेव कृष्णीभवति।

प्रथमः—दिवाकाले सूर्येण साकं तेन विहिता प्रतियोगिता, अधुना अन्धकारे च निशीथ-कृष्णत्वं स्पर्द्धते। स नु प्रेत इव दृश्यते।

कुन्दनः—भ्रातः, कथं विभूतिना कीर्तिरियमनेनैव विरचिता? उत्तर-कूटस्य यत्रैव दिशि दृष्टियोगं करोमि, तत्रैव तस्यावलोकनान्नास्ति निस्तारः। विकटं क्रन्दनमिव तत्।

( चतुर्थ-नागरिकस्य प्रवेशः )

प्रथमः—तदाम्रकाननमनु सन्निवेशितं राजशिविरमित्यधिगता वार्ता। तत्रैव युवराज संगोपितः।

द्वितीयः—अधुना तु वुध्यते। एतदर्थमेव सन्न्यासी अनेनैव पथा परिभ्रमति। अत्रैव स वद्धस्तिष्ठतु, इतोमध्ये सर्वं निरीक्ष्य आगच्छामि।

( नागरिकाणां प्रस्थानम् )

गानम्

धनञ्जयः—तन्त्रवन्धनेनैव किं भविष्यति कर्मावसानं ते, गुणिन् !

हे प्रिय।

उद्यद्वीणैव' किं स्थास्यति पतिता, हे गुणिन्
मम प्रिय ?

तेन भवति पराजयो मे, गच्छामि पराजयम्
व्यर्थं मे निखिलं तन्त्ररचनं हे गुणिन् मम प्रिय ।
स्पृशति करपद्मं ते यदि मम रचनां
तदैव ध्वनति वीणा मे हे गुणिन् मम प्रिय ।
अन्यथा समाहरिष्यति लज्जां धूलिपतिताम्
हे प्रिय, मम प्रिय ॥

( नागरिकाणां पुनःप्रवेशः )

प्रथमः—किमिदम् !

द्वितीयः—सर्वैः प्रहरिभिः साकमेव युवराजो महाराजखुल्लतातेन मोहनगृहं नीतः । तत् किं तावदस्य तात्पर्यम् ?

कुन्दनः—ननु प्रवहति तस्य शिरासु उत्तरकूटस्य रक्तधारा । यदत्र युवराजस्य समुचितो विचारो न भवति, एतदर्थमेव स प्रसभं वन्दीकृत्य तत्र नीतः ।

प्रथमः—भृशमसदृशमिदम् । अयन्तु अत्याचार एव । अस्माकं युवराजाय दण्डविधाने किमशक्ता वयम् ?

द्वितीयः—भ्रातः, अयमेवास्य समुचितः प्रतिकारः यत्—

प्रथमः—भवतु, भवतु, तेषां स हि स्वर्णखनिः—

द्वितीयः—अपरञ्च भ्रातः, किं ज्ञायते त्वया यत्तस्य गोष्ठे पञ्चविंशतिसहस्रं गावः सन्ति ?

प्रथमः—तासां सर्वा एव संख्यानुसारेण—कीदृशोऽन्यायः ! असहनीयोऽन्यायः ।

तृतीयः—अपरञ्च, तेषां तत्कुसुम्भक्षेत्रम्, तस्मात्तु अन्ततो गत्वा प्रतिवर्षम्—

द्वितीयः—साधु, साधु । तदेव तस्मात् प्रसभं ग्रहीतव्यम् । स हि

भविष्यति तस्य समुचितो दण्डः। किन्त्वधुना, अनेन सन्न्यासिना किं करणीयम् ?

प्रथमः—अत्रैवायं तिष्ठतु तावत्।

( नागरिकाणां प्रस्थानम् )।

[ धनञ्जयेन संगीतम् ]

परित्यागेनैष किमवोध, स्थास्यति निपत्तितम्
समाहरिष्यति स तं जानाति यस्तन्मूल्यम्।
चिन्तय तत् किमिवामूल्यरत्नम्
किं तद्धि वा धूलिजातम्
प्रणष्टे च तस्मिन् भवेद्व्यर्थं तत्कण्ठहारग्रन्थनम्।
न ज्ञायते किं दूतैर्भवति सर्वत इति तस्यानुसन्धानम्।
युष्मदनादृतो योऽभिवर्द्धते तन्मानम्
प्रीणितो यः, किं प्रेमिकप्राणाः सहिष्यन्ते तस्य वेदनम्॥

( कुन्दनस्य पुनःप्रवेशः )

कुन्दनः—देव, बन्धनं ते मोचयामि, मा गणय ममापराधम्। अधुनैव त्वं गृहे पलायस्व। न जाने, यद्यद्य रात्रौ—

धनञ्जयः—किं जाने, यदि अद्य रात्रौ आगच्छति आह्वानम्; तेनैव गृहपलायने नास्ति कोऽप्युपायः।

कुन्दनः—अत्र कुतस्ते आह्वानम्?

धनञ्जयः—उत्सवस्यान्तिमे अङ्के।

कुन्दनः—शिवतलस्याधिवासी भूत्वाऽपि उत्तरकूटस्य—

धनञ्जयः—भैरवस्योत्सवे अधुना शिवतलस्यारात्रिकमेव केवलमत्रशिष्यते।

[ नेपथ्ये—जागृहि, भैरव, जागृहि ]

कुन्दनः—नैतन्मह्यं रोचते, तत् प्रचलामि।

( उभयस्य प्रस्थानम्। उत्तरकूटात् द्वयोः राजदूतयोः प्रवेशः। )

प्रथमः—अधुना कुत्र गमिष्यामि? नवसानुदेशे ये खलु छागचारणं

कुर्वन्ति, तैस्तु कथितं यत्तैर्दृष्टम्—युवराज एकक: अनेन पथा पश्चिमां दिशं गतवान् इति ।

द्वितीयः—अद्य रात्रावेव अनुसन्धानेन स आविष्कर्तव्य इत्येव महाराजस्यादेशः ।

प्रथमः—मोहन-गृहं स नीत इत्येवं कथा समुद्भूता । किन्तु, उन्मतायाः अम्बाया वचनमाकर्ण्य स्पष्टमिव प्रतिभाति यत् यः खलु तया दृष्टः, सः अस्माकमेव युवराजः ; परन्तु. अनेनैव पथा स गतवान् ।

द्वितीयः—किन्तु, अन्धकारेऽस्मिन् एकक: स कुत्र गमिष्यतीति तन्न बुध्यते ।

प्रथमः—आलोकमन्तरेण पादमेकमपि अग्रे गन्तुं वयं न शक्ष्यामः । कोट्टपालसकाशादालोकं तावत् संग्रहीष्यामि ।

( उभयोः प्रस्थानम् । कस्यचन पथिकस्य प्रवेशः )

प्रथमः पथिकः—( उच्चैः शब्दापनं कृत्वा ) अरे बुध—न ! शम्बु—उ . विपदि पातितोऽस्मि । अग्रतो मां परिचाल्य तेनोक्तम्—ऊर्ध्वारोहणपथमतिक्रम्य सरल-पथावलम्बनेन परिभ्रम्य मया साकं मिलितो भव । अधुना न दृश्यते कोऽपि जनः । घनान्धकारे कृष्णवर्णं तद् यन्त्रम् इङ्गितेनाह्वयति । तेन भवति मे भीतिः । क आगच्छति ? कोऽसौ ? कथमुत्तरं न प्रदीयते ? किं बुधनस्त्वम् ?

द्वितीयः पथिकः—अहं निमकुः, दीपवाहकः । राजधान्यां निखिलायामेव निशायां प्रज्वलिष्यत्यालोकः । अतः, प्रदीपैरेव प्रयोजनम् । तत् कोऽसि त्वम् ?

प्रथमः पथिकः—अहमस्मि हुब्बाः । अभिनेतृसङ्घे मया गानं गीयते । पथि किं दृष्टं त्वया आन्दुनामधारिणः अधिकारिणो दलम् ।

निमकुः—आगच्छन्ति वहवो मनुष्याः, कमभिज्ञास्यामि ?

हुब्बाः—बहुषु मनुष्येषु न खलु स गणनीयः । अस्माकमान्दुः, स खलु एकः पूर्णः पुरुषः—जनसंघट्टे न कदापि स अनुसन्धातव्यः—सर्वान् अतिक्रम्य

स हि प्रकाशते। भ्रातः, अत्र मञ्जूषायां बहवः प्रदीपाः सन्तीति मन्ये; कृपया एकं प्रदेहि मे। गृहवासिनोऽप्यपेक्षया पथचारिणामेवालोकेन प्रयोजनमधिकतरम्।

निम्कुः—मूल्यन्तु कियत् दास्यसि ?

हुब्बाः—मूल्यप्रदाने समर्थे मयि त्वया साकं साहसेनैव अकथयिष्यम्। तत् कथं मधुरमालपनं करोमि ?

निम्कुः—यथार्थतस्त्वं रसिकोऽसि।

( प्रस्थानम् )

हुब्बाः—प्रदीपो न प्रदत्तः। किन्तु, मां रसिक इति परिज्ञातवानसि। नैतत् खलु नगण्यम्। घनान्धकारेऽपि रसिकः परिज्ञायते इत्येवं रसिकस्य माहात्म्यम्। अहो, झिल्लीस्वननेन गगनगात्रं रहस्यमयं सञ्जातम्। किन्तु, दीपवाहकेन सह रसालापं विसर्ज्य दस्युवृत्तिरेव यद्यवलम्बिताऽभविष्यत्, तदा तु प्रयोजनमसेत्स्यत्।

( अपरस्य कस्यचन पथिकस्य प्रवेशः )

पथिकः—अरे, कोऽसौ ?

हुब्बाः—महात्मन्, कथं त्रासयसि ?

पथिकः-अधुना प्रचल्यतां तावत्।

हुब्बाः—चलनार्थमेव मया वहिर्गतम्। सङ्घस्य सहयात्रिणमतिक्रम्य प्रचलने कीदृशोऽचलः सञ्जायते—इत्येतस्य तत्त्वस्य मनसि परिपाकार्थं मया प्रचेष्ट्यते।

पथिकः—सन्नद्धाः खलु सङ्घस्य जनाः, इदानीं तवैव मेलनेन पूर्णता स्यात्।

हुब्बाः—किमुच्यते त्वया ? वयन्तु त्रिमोहनावासिनः। कदभ्यासः कश्चिदस्माकमस्ति—यत् स्पष्टं वचनं विना किमप्यस्माभिर्नावगम्यते। संघस्य लोक इति कमाख्यापयसि ?

पथिकः—वयं हि चवुयाग्रामस्याधिवासिनः ; स्पष्टरूपेण शिक्षादानस्यानुशीलने वयं सुनिपुणाः। ( ताडयन् ) इदानीं बुध्यते किम् ?

हुव्वाः—वाढं, बुध्यते। एष एवास्य सरलार्थो यदिच्छया अनिच्छया वा नूनमेव मया गन्तव्यम्। कुत्र चलिष्यामि ? अधुना कृपया किञ्चिन्नम्रभावेनोत्तरं देहि। आलपनस्य प्रथमाघातेनैव बुद्धिर्मे स्वच्छीभूता।

पथिकः—शिवतलमेव गन्तव्यम्।

हुव्वाः—शिवतलम् ? अस्याममारजन्याम् ? तत्र किमभिनेतव्यम् ?

पथिकः—नन्दिसंकटस्य भग्नप्राकारस्य पुनर्निर्माणं तत्र नाटयितव्यम्।

हुव्वाः—भग्नप्राकारं मयैव निर्मास्यते ? भ्रातः, यतोऽन्धकारे रूपं मे त्वया न दृश्यते, अतएव एतादृशं कठोरं वाक्यमुच्चारयसि। अहन्तु—

पथिकः—त्वं यः कोऽपि भवसि, किमस्त्येव ते हस्तद्वयम् ?

हुव्वाः—नासति किञ्चिदपि न भवति—एतदर्थमेव। न तु अनेन—

पथिकः—मुखस्य वचनेन हस्तस्य परिचयो न भवति। स्थाने भविष्यति स परिचयः ; इदानीमुत्तिष्ठ।

( द्वितीयपथिकस्य प्रवेशः )

द्वितोयः पथिकः—अये कङ्कर, अपरः कश्चिन्मनुष्यः सम्प्राप्तः।

कङ्करः—कोऽसौ नरः ?

तृतीयः—जात, नाऽहं कोऽपि, लक्ष्मणोऽस्मि ; उत्तरभैरवस्य मन्दिरे घण्टां वादयामि।

कङ्करः—उत्तमम् ; हस्ते तु शक्तिरस्ति। शिवतलमागम्यताम्।

लक्ष्मणः—गमिष्यामि, किन्तु मन्दिरस्य घण्टाम्—

कङ्करः—देवो भैरवः स्वयमेव स्वकीयां घण्टां वादयिष्यति।

लक्ष्मणः—कृपां कुरु, क्षमस्व माम्। पत्नी मे रोगेण पीडिता।

कङ्करः—दूरं गते त्वयि तस्या रोगस्तु अपगतः स्यादुत वा सा पञ्चत्वं गच्छेत्। त्वयि तिष्ठत्यपि नूनं तदेव भवेत्।

हुव्वाः—भ्रातर्लक्ष्मण, निःशब्दमनुमोदस्व। कार्येऽस्मिन् अस्त्येव

विपदः सम्भावना। किन्तु, प्रतिवादेऽपि नास्ति विपदः स्वल्पता—इति कश्चिदाभासो मया सम्प्राप्तः।

कङ्करः—अमुत्र नरसिंहस्य कण्ठः श्रूयते। भो नरसिंह, किं कुशलमयी ते वार्ता?

[ कांश्चिन्मनुष्यान् संगृह्य नरसिंहस्य प्रवेशः ]

नरसिंहः—पश्यतु तावत्, संगृहीतैका गोष्ठी। अपराश्च कतिपयाः गोष्ठ्यः प्रागेव प्रस्थिताः।

कङ्करः—तदा तु आगम्यताम्। पथि अपराश्च कतिचित् सम्प्राप्स्यन्ते।

गोष्ठीगतः कश्चित्—नाऽहं गमिष्यामि।

कङ्करः—कथं न गमिष्यसि? किं जातम्?

उक्तव्यक्तिः—किमपि न जातम्। नाऽहं गमिष्यामि।

कङ्करः—नरसिंह, अस्य किं नाम?

नरसिंहः—वनोयारीति-नामायम्। पद्मवीजैर्माल्यं रचयति।

कङ्करः—भवतु, अनेन सह किञ्चिदालोचयामि। उच्यतां, कथं न गमिष्यसि?

वनोयारिः—नास्ति मे प्रवृत्तिः। शिवतलाधिवासिभिः सह नास्ति मे विवादः। न खलु ते अस्माकं शत्रवः।

कङ्करः—भवतु, उत वा वयमेव भवामस्तेषां शत्रवः। किन्तु तदर्थमेवास्ति किञ्चित् कर्तव्यम्?

वनोयारिः—नाऽहमन्यायमाचरितुं शक्ष्यामि।

कङ्करः—न्यायेन साकमन्यायस्यापि चिन्तनस्य स्वातन्त्र्यं यत्र वर्तते तत्रैव अन्यायो भवति अ-न्यायः। उत्तरकूटो विशालो देशः; तस्यांशरूपेण यत्कार्यं त्वया करणीयमस्ति, तत्र नास्ति ते किमपि करणीयम्।

वनोयारिः—उत्तरकूटमप्यतिक्रामति, अस्त्येव तादृशो महत्तरः यथा उत्तरकूटस्तस्य अंशस्तथा शिवतलमपि।

कङ्करः—अरे नरसिंह, वितर्के प्रवृत्तोऽयं जनः। देशस्य नास्ति ते अस्मादपि दारुणतरा विपत्तिः।

नरसिंहः—कठिने कर्मणि नियोजिते सति वितर्कस्तु विदूरं गच्छति। अतस्तमाकृष्य नयामि।

वनोयारिः—तेन हि युष्माकं भारो भविष्यामि। न चापि भविष्यामि युष्माकं कार्यकरः।

कङ्करः—उत्तरकूटस्य भारभूतोऽसि त्वम्। त्वां परिहातुं करोम्युपायस्यानु-सन्धानम्।

हुव्वाः—पितृव्य वनोयारे, यतस्त्वं सर्वं प्रविचार्य उपलब्धुमिच्छसि, तदर्थमेव ये खल्वविचार्य सर्वमवगमयन्ति, तैः साकं ते एतादृशः कलहः सञ्जायते। अतस्तेषां रीतिमायत्तीकुरु, अन्यथा स्वकीयां रीतिं विसृज्य स्थैर्यमवलम्बस्व।

वनोयारिः—का ते रीतिः?

हुव्वाः—मया गानं गीयते। तत्तु नाऽत्र शोभते; अतो मयाऽत्र स्वरो न वहिष्क्रियते। नोचेदितोमध्ये सर्वान् विमूढान् अकरिष्यम्।

कङ्करः—( वनोयारिं प्रति ) अधुना कस्ते अभिप्रायः?

वनोयारिः—नाहं पादमेकमपि चलिष्यामि।

कङ्करः—तदा तु वयमेव त्वां चालयिष्यामः। अरे, शृङ्खलय चेमम्।

हुव्वाः—अग्रजोपम कङ्कर, किञ्चित् वक्ष्यामि; मा क्रुद्धो भव। अस्य संहननेन यादृशी शक्तिरपव्ययिता भविष्यति, तस्याः सञ्चयेन महत्तरं कार्यं साधितं स्यात्।

कङ्करः—उत्तरकूटस्य सेवायां ये खल्वनिच्छुकास्तेषां दमनमप्येकं कार्यम्, अधुना यथाकालमेतदवगम्यताम्।

हुव्वाः—अस्मिन्नवसरे सर्वं मयावगतम्।

[ नरसिंहं कङ्करञ्च विना इतरेषां सर्वेषां प्रस्थानम् ]

नरसिंहः—अमुत्र विभूतिरागच्छति। विजयतां यन्त्रराजो विभूतिः।

[ विभूतेः प्रवेशः ]

कङ्करः—कार्यन्तु वहुदूरं प्रगतम्, सम्मिलिता न खलु स्वल्पाः जनाः। किन्तु, कथं त्वमत्रैव विराजसे? त्वामुपलभ्य सर्वे चोत्सवं पालयिष्यन्ति।

विभूतिः—उत्सवे नास्ति मे प्रीतिः।

नरसिंहः—उच्यतां कथमेतत्?

विभूतिः—कीर्तिं मे खर्वीकर्तुं नन्दिसंकटस्य प्राकारभङ्गस्य सन्देशो नूनमद्यैव समागतः। प्रचलति काचित् प्रतियोगिता मयैव सार्धम्।

कङ्करः—यन्त्रराज, कस्येयं प्रतियोगिता?

विभूतिः—नेच्छामि नामोच्चारणम्, सर्वै रेव ज्ञायते। उत्तरकूटे किमधिकः समादरो भविष्यति तस्य, उत मम वा—इयमेव समस्या प्रादुर्भूता। अस्मिन्नवसरे मनो मे विचालयितुं कुतोऽपि पत्ततो दूतः समागतः। मम मुक्तधारायाः बन्धनमपि भङ्क्ष्यतीति शासनवाक्यस्य आभासोऽपि तेन प्रदत्तः—वृत्तान्तश्चैषः युष्माभिर्न ज्ञायते।

नरसिंहः—किं प्रयुक्तमेतादृशं परुषवचनम्?

कङ्करः—विभूते, किं त्वयैतत् सोढम्!

विभूतिः—न हि शोभते प्रलापस्य प्रतिवचनम्।

कङ्करः—किन्तु विभूते, किं समुचिता एतादृशी समधिका संशयहीनता? त्वयैवोक्तं यत्—वर्तते बन्धनस्यैकस्मिन् स्थाने स्थानद्वये वा बन्धन-शैथिल्यम्। परिज्ञाते तस्य सन्धाने स्वल्पेनैव—

विभूतिः—यः खलु ज्ञास्यति सन्धानम्, स इदमपि ज्ञास्यति यदुन्मोचिते तस्मिन् छिद्रे न भविष्यति तस्यापि रक्षा, प्लावनेन क्षणेनैव सोऽपि निमङ्क्ष्यति।

नरसिंहः—प्रहरि-रक्षणेन न किं समुचितं स्यात्?

विभूतिः—तस्य छिद्रस्यान्तिकं यमराजः स्वयमेव रक्षति। बन्धनरक्षार्थं नास्ति काऽप्याशङ्का। इदानीं यदि निरुध्यते तन्नन्दिसंकटस्य पन्थास्तदा नावशिष्यते मे कोऽपि खेदः।

कङ्करः—त्वया तु नैतत् दुष्करम् ।

विभूतिः—न हि; उद्यतं तिष्ठति मे यन्त्रम् । इयमेव तत्र वाधा यत् संकीर्णः स हि गिरिपथः, स्वल्प एव जना अनायासं तत्र वाधाप्रदाने शक्ष्यन्ति ।

नरसिंहः—कियतीं वाधां प्रदास्यन्ति ? हन्यमानाः प्राकारं निर्मास्यामः ।

विभूतिः—प्रयोजनमस्ति मृत्युवरणार्थमनेकैर्मनुष्यैः ।

कङ्करः—सत्सु मारणकामिषु जनेषु मरणार्थमपि न भवति नराणामभावः ।

[ नेपथ्ये—जागृहि, भैरव, जागृहि ]

( धनञ्जयस्य प्रवेशः )

कङ्करः—पश्य, पश्य, गमनमुखे अमङ्गलचिह्नम् ।

विभूतिः—सन्न्यासिन् युष्मादृशः साधवः एतावत्कालं यावत् भैरवं जागरयितुमशक्ताः; परन्तु यः खलु पाषण्ड इति ख्यायते सोऽहमेव भैरवं जागरयितुं प्रचलामि ।

धनञ्जयः—तत्तु मया स्वीक्रियते; युष्मास्वेव न्यस्तो जागरणभारः ।

विभूतिः—नैतत्तु घण्टां सञ्चाल्य, आरात्रिकदीपं प्रज्वाल्य युष्मादृशैर्देवस्य जागरणम् ।

धनञ्जयः—न हि. यूयं शृंखलेन तं वद्धं करिष्यथ, शृंखलच्छेदनार्थमेव स जागरिष्यति ।

विभूतिः—निगडमस्माकं न हि सरलम्, तत्रास्ति घूर्णनात् परं घूर्णनम्, ग्रन्थेः परं पुनर्ग्रन्थिः ।

धनञ्जयः सर्वाधिकं दुःसाध्यं यदा भवति, तदैवागच्छति तस्य कालः ।

[ भैरवपन्थिनः प्रवेशः ]

( गानम् )

जयतु भैरव ! जयतु शंकर !

जयतु जयतु प्रलयंकर !

जयतु संशय-भेदन !

जयतु संकट-संहर !

शंकर हे शंकर !

( प्रस्थानम् )

[ रणजितो मन्त्रिणश्च प्रवेशः ]

मन्त्री—महाराज, शिविरं कृत्स्नमेव शून्यम्, तच्च बहुशो दग्धमेव। आसन् तत्र स्वल्पसंख्यकाः प्रहरिणः; ते तु—

रणजित्—वर्तन्तां ते यत्रैव; कुत्रास्ते अभिजिदित्येव ज्ञातव्यम्।

कङ्करः—महाराज, अस्माभिर्युवराजस्य दण्डः प्रार्थ्यते।

रणजित्—यः खलु दण्डनीयस्तस्य दण्डप्रदाने किं मया युष्मदभिमतमपेक्ष्यते?

कङ्करः—अनुसन्धानेन तमप्राप्य संशयगताः प्रजाजनाः।

रणजित्—कथम्? संशयः! स हि कमुपलक्ष्य?

कङ्करः—क्षम्यतां महाराजः। प्रजानां मनोभावो भवता ज्ञातव्यः। अनुसन्धाय युवराजस्य प्राप्तौ यादृशो विलम्बो भवति, तेषामधैर्यमपि तादृशमेव परिवर्धते। अतो यदा स प्राप्स्यते, तदा ते दण्डदाने महाराजस्यापेक्षां न करिष्यन्ति।

विभूतिः—महाराजस्यादेशमनपेक्ष्यैव नन्दिसंकटस्य भग्नदुर्गसंस्कारभारोऽस्माभिः स्वकीयहस्तैर्गृहीतः।

रणजित्—या खलु भवतो वंशस्यैवापकीर्तिस्तत्रास्ति भवतोऽपि गोपनसम्मतिरित्येतत् सन्देहपोषणं मनुष्याणां स्वाभाविकम्।

मन्त्री—महाराज, अद्य साधारण-जनानां मनांसि एकतः आत्मश्लाघया, अन्यतश्च क्रोधेनोत्तेजितानि। अधैर्येणाद्य अधैर्यं मा मा उद्दीपय।

रणजित्—कोऽत्र दण्डायमानस्तिष्ठति? किमसि धनञ्जयाख्यः सन्न्यासी?

धनञ्जयः—सन्न्यासिनमपि महाराजः स्मरतीति पश्यामि।

रणजित्—युवराजः कुत्र, इति नूनं त्वया ज्ञायते।

धनञ्जयः—न हि महाराज, यदहं निश्चितमेव जानामि, तत्तु गोपयितुं न शक्नोमि। अतएव मया विपदि निपत्यते।

रणजित्—तदा अत्रैव किं क्रियते?

धनञ्जयः—युवराजस्य प्रकटनार्थं मया अपेक्ष्यते।

( नेपथ्ये )

[सुमन! वत्स सुमन! अन्धकारः सञ्जातः, सर्वम् अन्धकारावृतं भवति।]

राजा—काऽसौ?

मन्त्री—सैवोन्मोत्ता नारी।

[ अम्बायाः प्रवेशः ]

अम्बा—अहो कुत्र सः। स तु न प्रत्यागतः।

रणजित्—कथं तस्यानुसन्धानं करोषि? सम्प्राप्ते काले स हि भैरवेण समाहुतः।

अम्बा—भैरवः किं केवलमाह्वयति? स हि किं कदापि न प्रत्यर्पयति? निःशब्दम्? गभीरायां रजन्याम्? सुमन! सुमन!

( प्रस्थानम् )

[ चरस्य प्रवेशः ]

चरः—शिवतलात् समागच्छन्ति सहस्रशो जनाः।

विभूतिः—किमिदम्? अकस्माद्वयं तत्र गत्वा तान् निरस्त्रान् करिष्यामः—इत्येवमासीत् कल्पनम्। नूनं युष्मासु कोऽपि विश्वासघातकस्तेभ्यः सन्देशं प्रदत्तवान्। कङ्कर, युष्मान् कतिजनान् ऋते न कोऽपि जानाति आभ्यन्तरीणं वृत्तान्तम्। तदा तु कथमेवम्—

कङ्करः—विभूते, किम्! किमस्मास्वपि जायते तव सन्देहः?

विभूतिः—सन्देहो न कुत्रापि सीमितः।

कङ्करः—तदा तु त्वय्यपि सञ्जातश्चास्माकम् सन्देहः।

विभूतिः—युष्माकमस्त्येव स ह्यधिकारः। भवतु, यथाकालमस्य विचारः करणीयः।

रणजित्—( चरं प्रति ) अपि जानासि—केनाभिप्रायेण ते आगच्छन्तीति ?

चरः—युवराजो वन्दीकृत इति तैः श्रुतम् ; अनुसन्धाय तम् आविष्करिष्यन्तीति तैः प्रतिज्ञातम्। इतस्त्वं मोचयित्वा ते तमेव शिवतलस्य राजानं कर्तुमिच्छन्ति।

विभूतिः—अस्माभिरप्यनुसन्धानं क्रियते ; तेऽप्यनुसन्दधति युवराजम् ; तन्नु पश्यामि—कस्य हस्ते निपततीति।

धनञ्जयः—युष्माकं गोष्ठीद्वयस्यैव हस्ते स पतिष्यति, तस्य मनसि नास्ति पक्षपातित्वम्।

चरः—सोऽयमागच्छति शिवतलस्य मण्डलपतिर्गणेशः।

( गणेशस्य प्रवेशः )

गणेशः—( धनञ्जयं प्रति ) देव, अपि तं प्राप्स्यामः ?

धनञ्जयः—अरे नूनमेव प्राप्स्यसि।

गणेशः—तन्निःसंशयमुच्यताम्।

धनञ्जयः—अरे, अवश्यमेव प्राप्स्यसि।

रणजित्—तत् कस्यानुसन्धानं क्रियते ?

गणेशः—अयमस्ति, राजन्, मोचनीयः सः।

रणजित्—कः ?

गणेशः—अस्माकं युवराजः। युष्माभिः स न काम्यते, स त्वस्माकं वाञ्छितः। किमस्माकं सर्वाण्येव युष्माभिर्निरुध्यन्ते ? सोऽपि ?

धनञ्जयः—अरे मूढ, न परिज्ञायते युष्माभिर्मानुषः। तस्य निरोधे कस्यास्ति शक्तिः ?

गणेशः—तमस्माकं राजानं कृत्वा रक्षिष्यामि।

धनञ्जयः—नूनं रक्षणीयः। राजवेशं परिधाय स आगमिष्यति।

[ भैरवपन्थिनः प्रवेशः ]

( गानम् )

तिमिर-हृद्-विदारण
ज्वलदग्नि-निदारुण
मरुश्मशान सञ्चर ।
शंकर हे शंकर ।
वज्रघोषवाणी
रुद्र-शूलपाणे
मृत्युसिन्धु-सन्तर
शंकर हे शंकर ॥

( प्रस्थानम् )

( नेपथ्ये )

[ जननी आह्वयति । वत्स सुमन, प्रत्यागच्छ, प्रत्यागच्छ । ]

विभूतिः—किमेतच्छ्रूयते ? कस्यायं शब्दः ?

धनञ्जयः—अन्धकारस्य वक्षसि कस्येदमट्टहास्यम् ?

विभूतिः—आः, तूष्णीं भव ! उच्यतां, कस्याः दिशः समागच्छति चायं शब्दः ?

( नेपथ्ये )

[ विजयतां भैरवः । ]

विभूतिः—स्पष्टोऽयं जलस्रोतसः शब्दः ।

धनञ्जयः—नृत्यारम्भस्य प्रथमोऽयं डमरुध्वनिः ।

विभूतिः—शब्दस्तु तीव्रो भवति, ननु प्रवर्धते ।

कङ्करः—इदन्तु—

नरसिंहः—मन्यते यत्—

विभूतिः—बाढं, बाढं, नास्ति सन्देहः । तूर्णं प्रवहति मुक्तधारा । तत् केन ध्वंसीकृतं बन्धनम् ? केन विदीर्णीकृतम् ? नास्त्येव तस्य परित्राणम् । ( कङ्कर-नरसिंह-विभूतीनां प्रस्थानम् )

रणजित्—मन्त्रिन्, किमिदं संवृत्तम् ?

धनञ्जयः—बन्धन-भंग-निमित्ते उत्सवे योगदानार्थं समागतम् आह्वानम् ।

( गानम् )

ध्वनति डमरुर्ध्वनति

हृदयमध्ये ध्वनति ।

मन्त्री—महाराज, मन्ये यथेदम्—

रणजित्—सत्यं, मयापि मन्यते, इदं तस्यैव—

मन्त्री—तं विना अपरस्य कस्यापि—

रणजित्—अस्ति एतादृशः साहसः ?

धनञ्जयः— ( गानम् )

नृत्यति चरणयुगं

प्राण-समीपं प्राण-समीपम् ॥

रणजित्—दण्डः प्रदातव्यश्चेत्तदाऽहमेव दण्डं विधास्यामि। किन्तु, उन्मत्तेभ्यश्चैतेभ्यः प्रजाजनेभ्यो देवानां प्रियं मम अभिजितं रक्षन्तु देवाः ।

गणेशः—प्रभो, किं वृत्तम् ? नाऽहं किमप्यवगच्छामि ।

( गानम् )

जागर्ति प्रहरी, जाग्रतः प्रहरः

स्पन्दते कम्पते नक्षत्र-निकरः ।

रणजित्—पदध्वनिरिव श्रूयते । अभिजित् ! अभिजित् !

मन्त्री—मन्ये सोऽयमागच्छति ।

धनञ्जयः— ( गानम् )

मर्मेषु मर्मेषु विकशति वेदनम्

मोच्यते बन्धनं मोच्यते बन्धनम् ।

( सञ्जयस्य प्रवेशः )

रणजित्—अये, सञ्जयः समागतः ! भोः कुत्रास्ते खल्वभिजित् ?

सञ्जयः—मुक्तधारास्रोतसा तत्रभवान् दूरं नीतः, नास्माभिः स कुत्रापि सम्प्राप्तः ।

रणजित्—कुमार, किमुच्यते त्वया !

सञ्जयः—मुक्तधारायाः बन्धनं युवराजेन विध्वस्तीकृतम् ।

रणजित्—सर्वमवगतम् । तेनैव मुक्तिसाधनेन तेनापि मुक्तिः सम्प्राप्ता । सञ्जय, किं त्वमपि तेन सार्कं नीतोऽसि ?

सञ्जयः—नहि, नहि । किन्तु, मयानुमितं यत् स तत्रैव गमिष्यति । गत्वा च तत्र अन्धकारे मया स प्रतीक्षितः । किन्त्वेतावदेव—तेन निवारितोऽस्मि, अन्ते च गमनं मे तेन निरुद्धम् ।

रणजित्—किं नु वृत्तं, कथ्यतां विस्तारेण ।

सञ्जयः—तस्य बन्धनस्य काञ्चित् त्रुटिं स केनाप्युपायेन परिज्ञातवान् । तत्रैव यन्त्रासुरे तेनाघातः प्रदत्तः । यन्त्रासुरेण सोऽपि प्रत्याहतः । तदा हि मुक्तधारा प्रत्याहतं तत् कलेवरं जननीव अङ्केकृत्य दूरं प्रचलिता ।

गणेशः—युवराजस्यानुसन्धानार्थमेव वयं निर्गताः । तर्हि, किं तं न पुनः प्राप्स्यामः ?

धनञ्जयः—युष्माभि स हि चिराय सम्प्राप्तः ।

( भैरवपन्थिनः प्रवेशः )

( गानम् )

जयतु भैरव ! जयतु शंकर !
जयतु जयतु प्रलयंकर !
जयतु संशयभेदन,
जयतु बन्धनच्छेदन ।
जयतु संकटसंहर
शंकर हे शंकर !
तिमिर-हृद्-विदारण
ज्वलदग्नि-निदारुण

मरुश्मशान-सञ्चर
शंकर हे शंकर !
वज्रघोष-वाणी
रुद्र, शूलपाणे
मृत्यु-सिन्धुसन्तर
शंकर हे शंकर !

---

